प्र० वृ०—इअ झाणग्गीति। हे सकलमङ्गलनिलय! विहितसंश्रितसत्त्ववितत्व्यापदाविलय! अप्रमेयमहिमन्! भगवन्! सर्वद्वन्द्वकरुणामहोदधिं दानशौण्डं सकलनायकप्रकाण्डमवाप्य न खलु मद्विधोऽर्थी किमपि पुनरुक्तादिदोषं पश्यतीति पूर्वप्रार्थितमप्यर्थं पुनः प्रार्थयते। कथमित्याह—त्वं मम वोधिफलो भवेति। तत्र वोधिः—[सम्यक्] सम्यक्त्वावाप्तिस्तां फलतीति वोधिफलः स त्वमेवंविधो भवेत्याशंसा। किंविशिष्टस्त्वम्? थुओ—स्तुतः। केन? मया। किंविशिष्टेन? वालवुद्धिणा वि—वालवुद्धिनाऽपि। वालः—शिशुः तस्येव तथाविधविचारचातुरीवर्जितसहजार्जवगुणोपेता बुद्धिः—मतिर्यस्य स तथा। यद्वा वाला—तन्वी बुद्धिः—मतिर्यस्य स तथा तेन एवंविधेनापि॥

ननु काव्यं हि कविना यशःप्रभृतीनर्थानभिलपता विधीयते। न च वालवुद्धेरमीपामेकोऽपि सम्भवति, तत् किमर्थमनर्थकं स्तुतिकृत् तं प्रयासमङ्गीकृतवानिति आशङ्क्याह—'भत्तीइ' इत्यादि। न खलु मया यशःकामेनार्थकामेन वा भगवतः स्तुतिर्ग्रथिता, किन्तु केवलया निर्व्याजया इतरदेवतासाधारणया भक्त्या—प्रभुप्रतिपत्त्या। तस्यां च केवलमनःशुद्धिप्रधानतमं कारणं, न तु सुललितपदन्यासपेशला भणितिरपीत्यदोषः। कथं स्तुतः? इअ—इति 'जयजंतुकप्पपायव!' इत्यादितः समारभ्य 'दाविज्जसु अप्पाणं पुणो वि कइया वि अम्हाणं' इति पर्यवसानया पूर्वोक्तयुक्त्या। किंविशिष्ट! भगवन्! त्वं मया स्तुतः? झाणग्गिपलीविअकम्मिंधण!—ध्यानाग्निप्रदीपितकर्मेन्धन! तत्र ध्यानं (परमशुक्लध्यानं) तदेवाग्निः—ज्वलनस्तेन प्रदीपितानि—भस्मीकृतानि ज्ञानावरणादिकर्माणि तान्येवैधांसि येन स तथा तस्य सम्बोधनम्। पुनः किंविशिष्ट? 'भवभवसमुद्दवोहित्थ!' भवः—संसारः (तत्र भवः—प्रादुर्भावः) स एवालब्धमध्यत्वेन सुदुस्तरत्वेन च समुद्र इव समुद्रस्तस्मिन् कर्मोर्मिभ्रमवशात् कदाचिन्नरकादिगतिष्वन्तर्निमज्जनपरायणानां, कदाचिदूर्ध्वं—स्वर्गादिगतिषु उन्मज्जनपरायणानां, सदुपदेशहस्तालम्बेन च विहितोद्धृतीनां भव्यप्राणिगणानां निर्वृतिपुरी[पार]प्रापणप्रवीणस्य चारित्रयानपात्रस्य प्रवर्तनाद् भगवानपि वोहित्थ इव—पोत इव तस्य सम्बोधनम्। स त्वमेवंविधो मम वोधिफलो भव। अत्र च इअ झाणग्गिपलीविअकम्मिंधण! इत्यत्र विश्रान्त्या धणवाल इत्येतावता पदेन स्तुतिकर्तुरभिधानम्। इति पञ्चाशत्तमगाथार्थः समाप्तः॥ ५०॥

तत्समाप्तौ च समाप्तेयमृषभपञ्चाशन्नाम(शिका नाम्नी) श्रीधनपालकविविरचिता श्रीयुगादिजिनस्तुतिर्ललितोक्तिनाम(म्नी) श्रीश्रीप्रभानन्दाचार्यविरचिता तद्वृत्तिश्च॥

॥ धनपालपञ्चाशिकावृत्तिः समाप्तेति॥

हे० वि०—अधुनोपसंहरन्नाह—(इअ त्ति)।

इति—उक्तेन प्रकारेण स्तुतो—नमस्कृतो मया। किंविधेन मया? वालवुद्धिनाऽपि—मन्दमतिनाऽपि। हे ध्यानाग्निप्रदीप्त(पित?)कर्मेन्धन! ध्यानाग्निना प्रदीप्तं—प्रज्वलितं कर्मलक्षणं

इन्धनं येन स तथोक्तस्तस्यामन्त्रणम् । पुनः किंविशिष्ट ? भवभयसमुद्दबोहित्थ !-संसारोपद्रवार्णवयानपात्र ! । बोधिः फलं यस्मात् स तथा । पाठान्तरं वा भवभवसमुद्दबोहित्थबोहिफलो तदभावसम्पद्य(द्यादकस्त्व) बोधिफलो बोधिजनकः इति । ननु किं उपहासेन स्तुतेनेत्याह-भत्त्या-विशिष्टभावेन । अनया च वक्रोक्त्या कविरात्मनोऽभिधानं दर्शयति धनपाल इति ॥

यद् व्याख्यानेन मया, पुण्यं निर्वाणसाधकं लब्धम् ।
तेन जनः सर्वोऽपि हि, जायेत जिनस्तुतौ निरतः ॥ १ ॥

श्रीधनपालस्य कृतिर्गणि-ना विवृतेति हेमचन्द्रेण ।
कर्मक्षयस्य हेतो-र्बोधिनिमित्तं च भव्यानाम् ॥ २ ॥

॥ इति श्रीऋषभपञ्चाशिकावृत्तिः समाप्ता ॥

## શબ્દાર્થ

इअ ( इति )=એમ.
झाण ( ध्यान )=ધ્યાન.
अग्गि ( अग्नि )=અગ્નિ.
पलीविअ ( प्रदीपित )=બાળી નાંખેલ.
कम्म ( कर्मन् )=કર્મ.
इंधण ( इन्धन )=ઇન્ધન, બળતણ.
झाणग्गिपलीविअकम्मिंधण !=ધ્યાનરૂપ અગ્નિ વડે બાળી નાંખ્યાં છે કર્મરૂપ ઇન્ધનો જેણે એવા!
बाल ( बाल )=(૧) બાલક; (૨) મન્દ.
बुद्धि ( बुद्धि )=મતિ.
बालबुद्धिणा=(૧) બાળક જેવી બુદ્ધિ છે જેની એવા; (૨) મન્દ મતિવાળા.
वि ( अपि )=પણ.
मए ( मया )=મારાથી.
भत्तीइ ( भक्त्या )=ભક્તિ વડે.
थुओ ( स्तुतः )=સ્તુતિ કરાયેલ.
भव ( भव )=ભવ, સંસાર.
भय ( भय )=ભય, બીક.
समुद्द ( समुद्र )=સમુદ્ર, દરિયો.
बोहित्थ (यानपात्र)=વહાણ, નૌકા.
भवभयसमुद्दबोहित्थ !=ભવની ભીતિરૂપ સમુદ્ર પ્રતિ વહાણ!
बोहिफलो=સમ્યક્ત્વરૂપ ફળ છે જે દ્વારા એનો.
भव (भव)=ઉત્પત્તિ.
बोहि ( बोधि )=સમ્યક્ત્વ.
फल ( फल )=ફળ.
भवभवसमुद्दबोहित्थबोहिफलो=સંસારને વિષે ભવરૂપ સમુદ્રમાં પ્રવહણ સમાન સમ્યક્ત્વરૂપ ફળ છે જે દ્વારા એનો.

## પદ્યાર્થ

ઉપસંહાર—

"જેણે ધ્યાનરૂપ અગ્નિ વડે કર્મરૂપ ઇન્ધનને પ્રજ્વલિત કર્યાં છે એવા અને અતિદુસ્તર ભવ-ભયરૂપ સમુદ્રને તરી જવામાં પ્રવહણ સમાન એવા હે ( નાથ )! બાળબુદ્ધિ એવા મેં સમ્યક્ત્વરૂપ ફળ આપનારા આપની આ પ્રમાણે ભક્તિપૂર્વક સ્તુતિ કરી છે."—૫૦

## સ્પષ્ટીકરણ

**કવીશ્વરના નામની ગર્ભિતતા—**

**ज्ञाणग्गिपलीविअकम्मिंधण ! वालवुद्धिणा** એ પદમાં ધણવાલના પ્રયોગથી કવીશ્વરે પોતાનું ધનવાળ–ધનપાલ એવું નામ સૂચવ્યું છે. આથી કરીને આ **ઋષભ–પંચાશિકાને ધનપાલની** કૃતિ તરીકે બેધડક ઓળખાવી શકાય છે.

**સ્તુતિ–રચનાનો હેતુ—**

કાવ્ય રચવાનાં કેટલાંક કારણો **કાવ્યપ્રકાશ**માં પ્રથમ પરિચ્છેદમાં નિમ્ન–લિખિત દ્વિતીય પદ્ય દ્વારા સૂચવવામાં આવ્યાં છે:—

"काव्यं यशसेऽर्थकृते, व्यवहारविदे शिवेतरक्षतये ।
सद्यः परनिर्वृतये, कान्तासम्मिततयोपदेशयुजे ॥"

અર્થાત્—**કાલિદાસ** પ્રમુખનો કાવ્ય રચનાનો હેતુ કીર્તિની પ્રાપ્તિ, **શ્રીહર્ષ** પ્રમુખનો દ્રવ્યનું સંપાદન, **મયૂર** પ્રમુખનો અનર્થનું નિવારણ ઇત્યાદિ છે.

આ **ઋષભ–પંચાશિકારૂપ** સ્તુતિ તો કવીશ્વરે કીર્તિની કામનાથી કે અર્થની વાંછાથી કે વાણીને વૈભવ પ્રદર્શિત કરવાના હેતુથી રચી નથી, પરંતુ પોતાનો ભક્તિ–ભાવ પ્રદર્શિત કરવાના હેતુથી રચી છે એમ તેઓ પોતે **भत्तीइ** શબ્દ વડે સૂચવે છે. આ સંબંધમાં એ ઉમેરવું અનાવશ્યક નહિ લેખાય કે આવી હાર્દિક ઉપાસના વિકારરૂપ મળને શુદ્ધ કરનારી અજબ જડીબુટ્ટી છે. નિર્મળ હૃદયમાંથી ઉદ્ભવતી આ ઉપાસનાના તારો સુસંગઠિત થતાં તેમાંથી ગગનગામી સૂર ઉદ્ભવે છે. તેને વ્યક્ત કરવા માટે જીભની અપેક્ષા રહેતી નથી. એની વાત તો કંઇ ઓરજ છે. જેને આની પ્રસાદીનો સ્વાદ લેવાનો સુવર્ણયોગ મળ્યો હોય તે આ સમજી શકે; તેનું વર્ણન તો તે પણ કરી શકે કે કેમ એ પ્રશ્ન છે.

**કવિ–રત્નની લઘુતા—**

**वालवुद्धिणा** પદ વડે કવિરાજે પોતાની લઘુતા જાહેર કરી શિષ્ટાચારનું પાલન કર્યું છે. જ્યાં સુધી સર્વજ્ઞતા પ્રાપ્ત ન થાય ત્યાં સુધી પોતાથી અધિક જ્ઞાનવાળાની અપેક્ષાએ તો પોતે મન્દમતિજ ગણાય અને એવો જેને બોધ હોય તે પોતે પોતાને તેવી રીતે ઓળખાવે એ શોભાસ્પદ છે.

---

महाकविश्रीधनपालविरचितायाः

# ॥ ऋषभपञ्चाशिकाया अवचूरिचतुष्टयम् ॥

अर्हम् ।

## महोपाध्यायश्रीधर्मशेखररचिता संस्कृतप्राकृतावचूरिः—

हे जगज्जन्तुकल्पपादप! जगत—विश्व तणा जंतु—प्राणीया रहइं[1] कल्पपादप—कल्पवृक्ष छेइं[2]। हे रागपङ्कजवनस्य चन्द्रातप! रागरूपीया पङ्कजवन—कमलवन रहइं चन्द्रातप—चन्द्रकिरण छेइं[3]। हे सकलमुनिग्रामग्रामणीः! सकल—समस्त मुनिग्राम—मुनिसमूह तीहं माहि ग्रामणी—अग्रेसर छेइं[4]। हे त्रैलोक्यचूडामणे! ते—तुभ्यं नमोऽस्तु। त्रिभुवन रहइं चूडामणि—मस्तकाभरण छेइं[5]। एवंविध तुझ रहइं नमस्कार हु[6] ॥ १ ॥

## श्रीनेमिचन्द्रमुनिवरप्रणीता अवचूरिः—

जयेति। नमः तुभ्यम्, अस्तु इति क्रियाऽध्याहारः। हे जगज्जन्तूनां कल्पो—मनोरथस्तत्पूरकः पादप इव कल्पपादपस्तस्य सम्बोधनम्। चन्द्रतेज इव—मृगाङ्कज्योत्स्नेव तस्य सम्बोधनम्। कस्येत्याह—रागः—प्रीतिलक्षणः स एव पङ्कजवनं तस्य। सकलमुनिवृन्दस्य—समस्तयतिवृन्दस्य अग्रणीः, आराध्यत्वात्, यद्वा सकलमुनय एव ग्रामः—कुटुम्बनिवासस्तस्य ग्रामणीः—नायकस्तत्सम्बोधनम्। त्रिलोकस्य चूडामणिः—मस्तकाभरणमिव तत्सम्बोधनम् ॥ १ ॥

## चिरन्तनमुनिरत्नविरचिता अवचूर्णिः—

सुरैः प्रणतपादस्य, नाभेयस्य महात्मनः ।
स्तुतेर्गुरूपदेशेन, किञ्चिद् वच्मि विवेचनम् ॥ १ ॥

इह भगवतो यद्यपि गुणस्तुतिः सर्वाऽपि नमस्काररूपा तथापि विशेषतः शिष्टसमयस्मरणार्थं विघ्नविनायकोपशमनार्थं च तावत् तस्या एवादौ नमस्कारमाह—जयजंतु०। हे जगज्जन्तुकल्पपादप!। चन्द्रातप इव—ज्योत्स्नेव। कस्येत्याह—रागः—प्रीतिलक्षणः स एव पङ्कजवनं तस्य। सकलमुनिवृन्दस्याग्रणीः। त्रिलोकस्य चूडा—सिद्धक्षेत्रं तस्मिन् मणिरिव तत्सम्बोधनम्। ते—तुभ्यं नमोऽस्त्विति सम्बन्धः। रूपकालङ्कारेण सम्बोधनानि ॥ १ ॥

## पूर्वमुनिवर्यसूत्रिता अवचूरिः—

अत्र जन्तुशब्देन सामान्यप्राणिगणपर्यायेणापि प्रथमतीर्थपतेर्गृहस्थावस्थासमयवर्तिनो मनुष्याः प्रोच्यन्ते,

---

१ गूर्जरगिरायां 'ने'स्थाने 'रहइं' इति प्रायुञ्जत तदानीं लोक इति ध्वन्यतेऽनेन ।
२-५ 'छं' इति ख-पाठः । ६ 'नमस्कारु हउ' इति ख-पाठः ।

यतस्ते युगलधर्माणः कल्पद्रुममात्रवृत्तयश्च । कल्पद्रुमाश्च तदानीमुच्छेदोन्मुखाः, अतस्तेषां भगवानेव तथाविधशिल्पाद्युपदेशेन कल्पद्रुमकार्यं निर्वर्तितवानिति समीचीनं हे जगज्जन्तुकल्पपादप ! । यथा जगदानन्दहेतुरपि चन्द्रातपः पङ्कजवनं निमीलयति, तथा विश्वजनीनोऽपि तत्तद्दुःखविवशं जगज्जन्तुजातं अनन्तसुखसम्बन्धबन्धुरत्वेन योजयंस्तत्प्रतिबन्धहेतौ वैरङ्गिकत्वं विहितवान् । सह कलाभिर्वर्तन्ते इति सकलाः, ते च ते मुनयश्च तेषां ग्रामः—समूहः, तत्र ग्रामणीः—प्रधानतमः । सकलशब्दः सर्ववाच्यत्र न, ग्रामशब्देन पौनरुक्त्यभावात् । त्रिलोकस्य चूडा—सिद्धिक्षेत्रम्, तत्र शाश्वतमण्डनहेतुत्वात् मणिरिव मणिस्तस्यामन्त्रणम् ॥

अत्र च 'जयजं०' अनेन साम्राज्यावस्था सूचिता, 'चन्दाय०' इत्यनेन छद्मस्थावस्था, 'सयल०' इत्यनेन उत्पन्नकेवलस्य समवसरणस्थावस्था, 'तिलोअ०' इत्यनेन मोक्षस्थावस्था सूचिता ॥ १ ॥

✻ ✻ ✻ ✻

**ध० अ०—हे नाथ ! त्वं जय । हे स्वामी ! तूं सर्वोत्कर्षी जयवंतु वर्त्ति । कैथम्भूतस्त्वम् ? रोषज्वलनजलधर ! रोष—क्रोधरूपीया ज्वलन—वैश्वानर रहइं जलधर—मेघ समान छइं । पुनः कैथम्भूतस्त्वम् ? वरज्ञानदर्शनश्रीणां कुलगृह ! वर—प्रधान ज्ञान दर्शन श्री—लक्ष्मी तणउं कुलगृह छं । पुनः कैथम्भूतस्त्वम् ? मोहतिमिरौघदिनकर ! मोहरूपीयां तिमिर—अंधकार रहइं दिनकर—सूर्य समान छइं । पुँनः कथम्भूतस्त्वम् ? प्रचुराणां गुणगणानां नगर ! प्रचुर—घणा गुण—चारित्रतपोरूप गुण-समूहनूं नगरु छं ॥ २ ॥**

**ने० अ०—साम्प्रतं स्तुतिमाह—जय रो० । जय त्वं भगवन् !—सर्वोत्कर्षेण वर्तस्व । रोषज्वलनजलधरः—क्रोधाग्निपयोदस्तत्सम्बोधनम् । हे कुलगृह !—विशिष्टसद्मन् ! । कासाम् ? वरज्ञानदर्शनयोः समृद्धीनाम् । मोहतिमिरौघदिनकर !—अज्ञानान्धकारसमूहतरणे ! । तथा हे नगर !—पत्तनकल्प ! । केषाम् ? गुणगणाः—चारित्र-तपोरूपास्तेषां पौराणामिव—विशिष्टलोकानामिव । प्रचुराणां—प्रभूतानामिति ॥ २ ॥**

**चि० अ०—जय रोस० । जय त्वं भगवन् !—सर्वोत्कर्षेण वर्तस्व । हे रोषज्वलनजलधर ! । कुलगृह !—विशिष्टगृह ! । कयोः ? वरज्ञानदर्शनश्रियोः । प्राकृतत्वात् द्विवचने बहुवचनम् । अयमाशयः—यथा बालाजनः पितुर्वेश्मनि निःशङ्कं तत्क्रीडारससम्पादके निवसन् परां निर्वृतिमागच्छति, तथा ज्ञानदर्शनश्रियावपि भगवन्तमधिगम्य विलसतः । हे मोहतिमिरौघदिनकर ! । नयर !—नगर ! । केषाम् ? गुणानां—प्रशमादीनां तेषां गणाः—समूहाः त एव पुरे भवाः पौराः । यथा कस्मिंश्चित् राजन्वति नगरे नागरिकैरकुतोभयैः सुखमवस्थीयते, एवं भगवति निःशेषदोषसंश्लेषविमुखे समग्राभिरामगुणग्रामैः । यद्वा प्रचुराणां—प्रभूतानामेवेति ॥ २ ॥**

**पू० अ०**—हे रोषज्वलनजलधर ! त्वं जयेति सम्बन्धः । वरे—अप्रतिपातिनी ज्ञानदर्शने तयोः श्रियोः कुलगृह !— पितृगृह ! । यथा बाल(ला)जनः पितृगृहे निःशङ्कं विलसति, तथा भगवति ज्ञानदर्शनश्रियौ । तत्राशेषविशेषविषयं ज्ञानं, सामान्यवस्तुगोचरं दर्शनम् । ननु सर्वस्यापि विलोकयितुः पदार्थेषु प्रथमाक्षसन्निपाते सामान्यबुद्धिरुत्पद्यते, ततो विशेषबुद्धिः, तत् कथं प्रथममत्र ज्ञानमुपात्तम् ? । उच्यते—अस्त्येवेयं व्यवस्था

१-४ सम्बोधनत्वात् 'कथम्भूत त्वम्' इति प्रतिभाति ।

निखिले जगति, न तु जगद्विलक्षणेषु केवलिषु, यतस्ते आदौ विशेषमवधारयन्ति, ततः सामान्यत', ( अतः ) अयं क्रमः समीचीनः । हे मोहतिमिरौघदिनकर ! । हे नगर ! । केषाम् ? गुणगणानां पौराणाम् ॥ २ ॥

* * * *

ध० अ०—अथ कवि जिननूं दुर्लभ दर्शन बोलइ । हे नाथ ! मया त्वं दिनकर इव दृष्टः । हे स्वामिन् ! मइं तूं दिनकर-सूर्यनी परिवि दीठउ[1] । किंविशिष्टेन मया ? 'मोहान्धकारचारकगतेन' मोहरूपीया चारक-गोतिहरा माहि गत-स्थित छउं । क्व सति ? किसिइं हूंतइ ? ग्रन्थौ कथमपि विघटिते सति । राग द्वेषि करी कठिन मोहनी गांठि मोटइं कष्टिइं [2]विघटिइं हूंतइ । किंविशिष्टे ग्रन्थौ ? 'कपाटसम्पुट[ वत् ]घने' कपाट संपुटनी परिइं घन-निविड छइ । [3]अनेरो कोएक गोतिहरा माहि राख्यउ [4]छइ । ते कमांडि दीधे अंधकारि करी सूर्य न देषइ तिम बहुल कर्म जीव अगुणहुत्तरि (६९) कोडाकोडी सागरोपमप्रमाण कालरूप मोहनीय कर्म तणी ग्रंथि भेद्या विणु वीतरागरूपीउ सूर्य न देषइ ॥ ३ ॥

ने० अ०—साम्प्रतं भगवद्दर्शनदुर्लभतामाह—दिट्ठो० । दृष्टः-सम्यगवलोकितो हे जिन ! त्वम्, मयेति गम्यते । कथमपि-कृच्छ्रेण विघटिते-विगलिते ग्रन्थौ-मोहमये । किंविधे ? 'कपाटसम्पुटघने' कपाटयोः सम्पुटं-युग्मं तदिव घनं-गुपिलम्, अनादिभवकर्मोपात्तत्वात् । किंविधेन मया ? 'मोहान्धकारचारकगतेन' मोहनीयाख्यं कर्मैव अन्धकारेण युक्तश्चारकः-कारागृहं तत्र गतेन । क्व इव ? दिनकर इव । यथा नृपचारके तमोमये गतेन ( केनचित् ) कथञ्चिद् दैवाद् विघटिते कपाटसम्पुटे भानुर्दृश्यते तथा त्वमपि मया दृष्ट इति भावः ॥ ३ ॥

चि० अ०—साम्प्रतं भगवद्दर्शनदुर्लभतामाह-दिट्ठो० । सम्यगवलोकितो हे जिन ! त्वं मया कथमपि-कृच्छ्रेण ग्रन्थौ-मोहलक्षणे विघटिते-निगलिते । किंविधे ? 'कपाटसम्पुटघने' कपाटयोः सम्पुटं-युग्मं तदिव घनं-गुपिलम्, अनादिभवकर्मोपात्तत्वात् । किंविधेन मया ? 'मोहान्धकारचारकगतेन' मोहनीयाख्यं कर्म एवान्धकारयुक्तश्चारकस्तत्र गतेन । क्व इव ? दिनकर इव । कोऽर्थः ? यथाऽन्धकारचारकस्थेन केनचित् कपाटसम्पुटे विघटिते कथञ्चित् भानुर्दृश्यते, तथा त्वमपि मया दृष्ट इति भावः ॥ ३ ॥

धू० अ०—हे जिन ! त्वं दृष्टोऽसि, तव वीतरागादिस्वरूपं मच्चित्ते अधुना अवततारेत्यर्थः । क्व सति ? गिरिसरिदुपलघोलनान्यायेन अकामनिर्जरया कर्मराशिं क्षपयता यथाप्रवृत्तिकरणेन ग्रन्थिप्रदेशप्राप्तेन । स च कर्मग्रन्थिः कर्कशघनप्ररूढगूढपरिणामजनितो वीर्यविशेषान्निशितकुठारधाराप्रतिमेनापूर्वकरणेन बिभिदे । ग्रन्थिप्रदेशं यावदनन्तशोऽपि अभव्या यान्ति । अतो ग्रन्थौ विघटिते मोह एवान्धकारं तद्गतेन-तदायत्तेन । यथा नृपचारकगतेन दैवाद् विघटिते कपाटसम्पुटे सूर्यो दृश्यते, तथा ॥ ३ ॥

* * * *

ध० अ०—अथ कवि सूर्यरूप जिननी स्तुति बोलइ । हे जिनरवे !-जिनसूर्य ! भविक-

[1] 'परि दीठउ' इति ख-पाठः । [2] 'विघट्टइ' इति क-पाठः । [3] 'अनेरउइ कोएक' इति ख-पाठः । [4] 'हुइ' इति ख-पाठः ।

कमलानां दृढबद्धान्यपि मोहतमोभ्रमरवृन्दानि विघटन्ते । हे जिनरूपीया सूर्य ! भविक-रूपिया कमलानां मोहतम–मोहान्धकाररूप भमरना समूह विघटइं–ढीलां थाइं[1] । किंविशिष्टानां भविककमलानाम् ? त्वद्दर्शनप्रहर्षोच्छ्वसितानाम् । तुझ देपिवानइं हर्षिइं ऊसशा छइं[2] । कथम्भूतानि मोहतमोभ्रमरवृन्दानि ? दृढबद्धान्यपि दृढ–अतिहिं बद्ध–बांध्यां छइ ॥ ४ ॥

ने० अ०—अधुना रविरूपेण स्तुतिमाह—भवि० । हे जिनरवे ! भव्यकमलेभ्यः प्राकृतत्वात् पञ्चमीस्थाने षष्ठी, त्वद्दर्शनात् प्रहर्षः–प्रमोदस्तेनोच्छ्वसद्भ्यः–भवदवलोकनानन्दोन्मितेभ्यः समुद्धुपितरोमकूपेभ्यः, पक्षे विकसद्भ्यः । चिरप्ररूढान्यपि, पक्षे पद्मकोशान्तर्निबिडनिपीडितान्यपि । मोहः–अज्ञानं तदेव बध्यमानं कर्म तान्येव भ्रमरवृन्दानि । अयं भावः–यथा सूर्यकरविकस्वरेभ्यः पद्मेभ्यः भ्रमरश्रेणयः पृथक् स्युः, एवं जिने साक्षात्कृते शुभवासनातो मोहतमांसि विघटन्ते–प्रलीयन्ते ॥ ४ ॥

चि० अ०—अथवा(धुना ?) रविरूपेण स्तुतिमाह—भवियकम० । भव्यकमलेभ्यः प्राकृतत्वात् पञ्चम्याः षष्ठीत्वदर्शनात् प्रहर्षः–प्रमोदस्तेन उच्छ्वसद्भ्यः–समुच्छ्वसितरोमकूपेभ्यः, पक्षे विकसद्भ्यः । चिरप्ररूढान्यपि । 'मोहतमोभ्रमरवृन्दानि' मोह एव यथावस्थितवस्तुस्वरूपाप्रदर्शकत्वात् तमांसि, तान्येव भ्रमरवृन्दानि । विघटन्ते–पृथक्–दूरे भवन्ति । पक्षे पद्मकोशान्तर्निबिडनिपीडिनान्यपि । मोहः–अज्ञानं तद्बध्यमानं कर्म तदेव भ्रमरवृन्दानि । अयं भावः–यथा सूर्यकरविकस्वरेभ्यः पद्मेभ्यो भ्रमरश्रेणयः पृथक् स्युः, एवं भव्यानामपि जिने साक्षात्कृते शुभवासनातो मोहतमांसि विघटन्ते–विलीयन्ते ॥ ४ ॥

पू० अ०—प्रभौ–दृष्टे यद् भवति तदाह । जिनरवे ! भव्यकमलेभ्यः त्वद्दर्शनप्रहर्षोच्छ्वसद्भ्यः–विकसद्भ्यः चिरप्ररूढान्यपि–पद्मकोशान्तर्निपीडितान्यपि मोहस्तमो–बध्यमानं कर्म ते (स) एव भ्रमरवृन्दानि । मोहो–मूर्च्छा मुकुलनलक्षणा । तमसो वर्णेन (तमःसवर्णानि) तमोरूपाणि ॥ ४ ॥

* * * *

ध० अ०—अथ कवि जिनना पहिला कल्याणकनइं द्वारिइं स्तुति बोलइ । हे नाथ ! त्वयि नाभिकुलकरगृहावतारोन्मुखे सति सर्वार्थसुरविमानस्य सर्वो लष्टत्वाभिमानो नष्टः । हे स्वामी ! तइं नाभि कुलगुरुनइं घरि अवताराभिमुख अवतरिइ हूंतइं सर्वार्थ सुरविमान तणउ सर्व–सघलउ लष्टत्वाभिमान–रमणीयकपणा[3] तणउ अभिमान नाठउ ॥ ५ ॥

ने० अ०—लट्ठ० । हे नाथ ! सर्वार्थसिद्धेः सुरविमानस्य लष्टत्वाभिमानो–मनोज्ञत्वाहङ्कारो नष्टः–प्रलयं गतः समस्तः । क सति ? त्वयि नाभिकुलकरगृहावतारोन्मुखे ॥ ५ ॥

चि० अ०—प्रथमकल्याणकद्वारेण स्तुतिमाह–लट्ठत्तणा० । हे नाथ ! नाभिकुलकरस्य

१ 'थायइं' इति ख–पाठः । २ 'ऊससां छइं' इति ख–पाठः । ३ 'रमणीयण(?)के पणा' इति क–पाठः ।

त्वयि गृहे अवतारस्तत्र उन्मुखे–सम्मुखे सति सर्वार्थसुरविमानस्य सर्वः–समस्तो लष्टत्वाभिमानः–प्रधानत्वाहङ्कारो नष्टः–प्रलयं गतः, एतेन समृद्धिसौभाग्यं नष्टमित्यर्थः ॥ ५ ॥

पू० अ०—सर्वार्थाख्यसुरविमानस्य लष्टत्वाभिमानो नष्टः त्वयि नाभिकुलगृहावतारोन्मुखे ॥ ५ ॥

* * * *

ध० अ०—अथ कवि स्वामी अवतरिया पूठिइं कल्पद्रुमनूं स्वरूप बोलइ । हे जगद्गुरो ! जगत–विश्व तणउ गुरु–पिता छं । त्वयि जगति–विश्वे चिन्तादुर्लभमोक्षसौख्यफलदे अपूर्वकल्पद्रुमे अवतीर्णे सति कल्पतरवः–कल्पवृक्षा हित्था इव–लज्जिता इव प्रोपिता–अभावं प्राप्ताः । हे स्वामी ! तइं विश्व माहि चिंतातीत दुर्लभ मोक्षसौख्य दाईइ अपूर्व कल्पवृक्षि अवतरिइं हूंतइं कल्पवृक्ष लाज्यानि परिइं अदृष्ट हूआ ॥ ६ ॥

ने० अ०—भगवति समुत्पन्ने किं जातमित्याह—पइं० । त्वयि जगति अवतीर्णे अपूर्वे कल्पद्रुमे–विशिष्टशाखिनि । किम् ? हित्था इव–लज्जिता इव । उपमायां इवशब्दोऽत्र । हे जगद्गुरो ! कल्पतरवः प्रोपिता–अभावमापन्नाः । किल कालेनैव ते विनष्टाः, परं कविनोत्प्रेक्ष्यन्ते । 'चिन्तादुर्लभमोक्षसौख्यफलदे' चिन्तया दुर्लभं यन्मोक्षसौख्यं तदेव फलं तद् ददाति यः स तस्मिन् ॥ ६ ॥

चि० अ०—भगवति समुत्पन्ने किं जातमित्याह–पइं चिंता० । हे जगद्गुरो ! जगति त्वयि अवतीर्णे अपूर्वकल्पद्रुमे–विशिष्टशाखिनि । किम् ? 'हित्था इव' ह्रियि–लज्जायां तिष्ठन्तीति ह्रीस्था इव–सलज्जा इव । 'हित्था' इति देश्यः ( शब्दः ) । कल्पतरवः प्रोषिता–अभावमापन्नाः । कलिकालेनैव ते विनष्टाः, परं कविना एवमुत्प्रेक्ष्यन्ते । 'चिन्तादुर्लभमोक्षसौख्यफलदे' चिन्तादुर्लभमोक्षसौख्यं फलं तदेव तद् ददाति यः स तथा । अत एव अपूर्वकल्पद्रुम इति ॥ ६ ॥

पू० अ०—त्वयि चिन्तातीतदुर्लभमोक्षसौख्यफलदेऽवतीर्णे ह्रीस्थाः–सलज्जा इव प्रोषिताः–तिरोवभूवुः ॥ ६ ॥

* * * *

ध० अ०—अथ कवि जिनना माहात्म्य द्वारिं स्तुति बोलइ । हे नाथ ! तव जन्मनि अस्यां अवसर्पिण्यां सूसमदूस(सुषमदुःष)माख्येन तृतीयारकेण कालचक्रस्य एकस्मिन् पार्श्वे कनकमयेनेव स्फुरितम् । हे जिन ! ताहरइ जन्मि इणइं अवसर्पिणीकालि सूसमदूसम नामा त्रीजइं अरइं कालचक्रनइ एकइं पासइं सुवर्णनी परिइं स्फुरिउ–जलहल्यूं । जिम कालचक्रनउ एक आरउ अति सर्वोत्तम शोभइ तिम कालचक्र इजि(ति?) कालूं चक्र तिहां त्रीजइं अरइं तइं अवतरिइं सुवर्णनी परि अत्यंत शोभा पामी ॥ ७ ॥

ने० अ०—इदानीं जन्माधिकृत्य स्तुतिमाह—अर० । हे नाथ ! तव जन्मनि अरकेण–कालसंज्ञिकचक्रेण तृतीयकेन अस्यामवसर्पिण्यां स्फुरितं–विलसितम् । क्व ? कालचक्रैकपार्श्वे । काल-

चक्रं–द्वादशारकोऽर्थं तस्यैकश्चासौ पार्श्वश्च तस्मिन् । [स] उत्प्रेक्षते कनकमयेनेव । अयमर्थः— यथा कृष्णचक्रे कनकमयः अरकः शोभते, तथा काललक्षणेऽपीति ॥ ७ ॥

चि० अ०—जन्मकल्याणकद्वारेण स्तुतिमाह–अरएणं० । इह चार्हतां पञ्चस्वपि कल्याणकेषु सर्वलोकप्रकाशकं निमेषमात्रं कालमुल्बणं तेजःपटलमुन्मीलति एतदेव कविरुत्प्रेक्षते । हे नाथ ! तव जन्मनि अस्यामवसर्पिण्यां तृतीयेन कालसंज्ञकेन अरकेण कनकमयेनेव स्फुरितं–विलसितम् । क ? 'कालचक्रैकपार्श्वे' द्वादशभिः अरकैर्विंशतिकोटाकोटीसागरोपमप्रमाणं कालचक्रं तस्यैकपार्श्वे । अयमर्थः–यथा कृष्णचक्रे कनकमयोऽरकः शोभते, तथा काललक्षणेऽपीति । पुनः प्रकारान्तरेणाह–स्फुरितमितरारकविलक्षणं किमप्यद्भुतं तेजो धृतम्, अत एव स्वर्णनिर्मितेनेव, कल्याणकाद्युत्सवविकलं तु शेषं कालचक्रमन्वर्थाभिधानमेव, तत्र भगवज्जन्मसमयपरिवर्तमानं कालशकलं तदानीमद्भुततेजःकलितत्वेन सकलेऽपि कालचक्रे कथं न स्फुरतु ? ॥ ७ ॥

पू० अ०—अर्हतां पञ्चस्वपि कल्याणकेषु निमेषमात्रं कालं तेज उन्मीलति एतदेवाह । तव जन्मनि कालचक्रैकदेशवर्तिना तृतीयारकेण स्फुरितं–तेजो धृतम्, अत एव काञ्चननिर्मितेनेव ॥ ७ ॥

✻ ✻ ✻ ✻

ध० अ०—अथ कवि अभिषेकविधि अंगीकरी बोलइ । हे स्वामी ! त्वं जन्मानन्तरं यत्र गिरौ सुरैरभिषिक्तः । तूं जन्म्या पूठि सुरेन्द्रादिके जीणइ पर्वति अभिषेकु । हे नाथ ! त्वं यत्र गिरौ शिवसौख्यसम्पदं प्राप्तः । हे स्वामी ! जिहां तउं शिव–मोक्षनी संपद्–लक्ष्मी पामिउ । तौ द्वावपि अष्टापदशैलौ वर्तेते । ते बिन्हइ अष्टापद पर्वत वर्तइं । अष्टापद शब्दिइं सुवर्ण कहीइं एह कारण सुवर्णनउ पर्वत मेरु जाणिवउ । तिहां जिन रहइं जन्माभिषेक हूउ । जिहां मोक्षलक्ष्मी पामिउ तेहइ आठि पावडियारे करी अष्टापद कहीइ । तौ द्वावपि पर्वतौ गिरिकुलस्य–पर्वतसमूहस्य शीर्षामेलौ–शिरोमुकुटौ ज्ञेयौ । ते मेरु पर्वत अनइ अष्टापद पर्वत अनेरा पर्वत-समूहना मस्तकनइं अष्टापद सुवर्णसंबन्धीया मुकुट जाणिवा ॥८॥

ने० अ०—अभिषेकविधिमुररीकृत्याह—जम्मि० । यत्र त्वं अभिषिक्तः–स्नापितः सुरैः, यत्र च शिवसौख्यसम्पदं प्राप्तः तौ द्वावपि अष्टापदशैलौ वर्तेते । एकत्र अष्टापदं–स्वर्णं तन्मयः शैलः, अन्यत्र अष्टापदानि–जीवविशेषा यत्र स तथोक्तः । किंविधौ ? शीर्षामेलौ–शिरःशेखरकौ । कस्य ? गिरिकुलस्य–पर्वतसमाजस्य ॥ ८ ॥

चि० अ०—अभिषेकस्तुतिमुररीकृत्य स्तुतिमाह–जम्मि तुमं० । यत्र त्वमभिषिक्तः–स्नापितः । कैः ? सुरैः । यत्र च शिवसौख्यसम्पदं प्राप्तः । तौ द्वावपि अष्टापदशैलौ वर्तेते । एकत्र अष्टापदं–सुवर्णं तन्मयः शैलो मेरुः, अन्यत्र अष्टौ पदानि यत्र स तथोक्तः । किंविशिष्टौ ? 'शीर्षापीडौ' शिरःशेखरौ । कस्य ? 'गिरिकुलस्य' पर्वतसमाजस्य । अत्र प्राकृतत्वात् द्विवचने बहुवचनम् ॥ ८ ॥

पू० अ०—तावुभावप्यष्टापदशैलौ गिरिकुलस्य सीसामेला–शिरोमुकुटौ जातौ। एकोऽष्टापदस्य–सुवर्णस्य शैलः यत्र त्वमभिषिक्तो मेरुरित्यर्थः, अन्यो'ऽयोध्या'परिसरस्थोऽष्टापदाभिधः यत्र त्वं शिवसौख्यसम्पदं प्राप्तः ॥ ८ ॥

* * * *

ध० अ०—अथ जिननइं राज्याभिषेकविधि अंगीकरी बोलइ। हे नाथ! ते धन्याः–पुण्यभाजो यैस्त्वं सविस्मयं–सहर्षं दृष्टोऽसि। हे स्वामी! ते धन्य–पुण्यवंत प्राणीया जेहे तूं सविस्मय–सहर्ष दीठउ। किंविशिष्टस्त्वम्? हरिणा–इन्द्रेण झगिति–शीघ्रं चिरधृतनलिनीपत्राभिषेकसलिलैः कृतराज्यमज्जनः–कृतराज्याभिषेकः। हरि–इंद्रिइं शीघ्र चिरकाल धृत–धरी नलिनी–कमलिनी तणे पत्राभिषेक तणइं सलिल–पाणी करी कृत–कीधउ राज्याभिषेक छइ जेह ताहरउ ॥ ९ ॥

ने० अ०—राज्याभिषेकविधिमङ्गीकृत्याह—धन्ना०। धन्याः–पुण्यभाजस्ते यैर्दृष्टोऽसि-अवलोकितोऽसि। कथम्? सविस्मयं–सकौतुकं सहर्षं वा। किंविधः? कृतराज्यमज्जनो–विहितराज्याभिषेकः हरिणा–इन्द्रेण झगिति–शीघ्रम्। कीदृशैः? चिरधृतं नलिनीपत्राभिषेकजलं यैस्ते तथाविधैरिति ॥ ९ ॥

चि० अ०—राज्याभिषेकमङ्गीकृत्य स्तुतिमाह—धन्ना०। धन्याः–पुण्यभाजस्ते यैर्दृष्टोऽसि–अवलोकितोऽसि। कथम्? 'सविस्मयम्' सकौतुकं सहर्षं (वा)। किंविधः? कृतराज्याभिषेकः हरिणा–इन्द्रेण झगिति–शीघ्रम्। कीदृशैः 'चिरधृतनलिनीपत्राभिषेकसलिलैः' अभिषेकाय जलं अभिषेकजलम्, चिरं–प्रभूतकालं धृतं–अवस्थापितं नलिनीपत्रैरभिषेकजलं यैस्तैरिति ॥ ९ ॥

पू० अ०—ते धन्या यैस्त्वं सविस्मयं दृष्टः झगिति इन्द्रेण कृतराज्यमज्जनः। चिरं धृतम्–अवस्थापितं नलिनीपत्रैरभिषेकोदकं यैः ॥ ९ ॥

* * * *

धo अ०—अथ जिननइं राज्यविधि उद्दिसी बोलइ। हे नाथ! त्वं यासां प्रजानां–लोकानां स्वामी जातः, ताः प्रजाः कृतार्था जाताः। हे नाथ! तूं जीव लोकनु स्वामी–ठाकुर हूओ ते प्रजा–लोक कृतार्थ हुया। किंविशिष्टस्त्वम्? 'दर्शितविद्याशिल्पः' दर्शित–दिषाड्या विद्याना शिल्पविज्ञान छइं जीणइं तइं। पुनः किं०? कथिताशेषलौकिकव्यवहारः' कथित–कहिउ अशेष–समस्त लोकनउ व्यवहार–पाणिग्रहणादि आचार छइं जीणइं तइं ॥ १० ॥

ने० अ०—अधुना राज्यपरिपालनविधिमाश्रित्याह–दावि०। जातः–सम्पन्नः त्वं यासां प्रजानां स्वामी–प्रभुः, ताः प्रजाः कृतार्थाः–कृतकृत्याः। किंविधस्त्वम्? दर्शितविद्याशिल्पः।

'वज्जरिअ' त्ति देशीभाषया कथितोऽशेषलोकव्यवहारो येन स तथा.। विद्याः–शब्दविद्यादयः लिखितगणितादिकाश्च, शिल्पं–कुम्भादीनि, व्यवहारः–परिणयनादीनि ॥ १० ॥

चि० अ०—अधुना राज्यप्रतिपालनविधिमाश्रित्य स्तुतिमाह–दाविय० । यासां प्रजानां त्वं स्वामी–प्रभुर्जातः–सम्पन्नः, ताः प्रजाः–लोकाः कृतार्थाः–कृतकृत्या इति । किंविधः? 'दर्शितविद्याशिल्पः' दर्शितानि विद्याः–शब्दविद्यादिका लिखितादिकाश्च शिल्पानि–कुम्भ(कारा)दीनि च येन स तथा । 'वज्जरिअ' त्ति देशीयभाषया कथितोऽशेषलोकव्यवहारः–परिणयनादिको येन स तथा ॥ १० ॥

पू० अ०—दर्शितविद्याशिल्पः । 'वज्ज०'–व्याकृतोऽशेषजनानां व्यवहारो येन ॥ १० ॥

卐 卐 卐 卐

ध० अ०—अथ कवि जिननी दीक्षाविधि बोलइ । हे धीर! यथा त्वं नियमधुरं–दीक्षाग्रहणपरिणामं प्रतिपन्नः तथा कोऽन्यो जीवः?। परीषह–उपसर्गे करी अक्षोभ्य!। हे धीर! स्वामिन्! जिम तइं नियमधुर–दीक्षा लइवानउ परिणामु आश्रयु तिम कुणि अनेरइं आश्रयु? अपि तु कुणिहि नाश्रयु । किंविशिष्टस्त्वम्? 'बन्धुविभक्तवसुमतिः' बन्धु–भरतेश्वर बाहुबलि प्रभृति सउ पुत्रनइं विभक्ता–विहिंचि आपी वसुमती–पृथ्वी छइ जीणइं तइं । पुनः किं०? वत्सरं–संवत्सरं यावत् अविच्छिन्नो दत्तो धननिवहो–धनसमूहः। वच्छर–संवत्सर जाण अविच्छिन्न–निरंतर दत्त–दीधउ धननिवह–धनसमूह छइ ॥ ११ ॥

ने० अ०—दीक्षामङ्गीकृत्य स्तुतिमाह—बंधु० । हे धीर!–महाप्रभाव! यथा त्वं नियमधुरं–प्रव्रज्याग्रहणपरिणामं प्रतिपन्नवान् तथा कोऽन्यः?। न कश्चिदासीत्। कीदृशः? 'बन्धुविभक्तवसुमतिः' बन्धूनां–पुत्रादीनां सामन्तादिभ्यो (दीनां?) वा विभागीकृता वसुमतिः–क्षितिर्येन । वत्सरं–वर्षं यावद(वि)च्छिन्नो–निरन्तरं दत्तः, लोके(भ्यः) इति गम्यते, धननिवहो (येन) स तथा ॥ ११ ॥

चि० अ०—अथ दीक्षाकल्याणकमधिकृत्य गाथाद्वयेन स्तुतिमाह–बंधु० । हे धीर!–महाप्रभाव! यथा त्वं नियमधुरं–प्रव्रज्याग्रहणपरिणामं प्रतिपन्नवान्, तथा कोऽन्यः?। न कश्चिदित्यर्थः। कीदृशः? 'बन्धुविभक्तवसुमतिः' बन्धूनां सुसामन्तादीनां (वा) विभक्ता–विभागेनार्पिता वसुमती येन स तथा । अत्र च समासान्ताकच्प्रत्ययस्य प्राप्तस्यापि प्राकृतत्वात् एवाभावः। 'वच्छरं' वर्षं यावत् अविच्छिन्नं दत्तः लोकेभ्यः इति गम्यते, धननिवहो येन स तथा । धीर! इति सम्बोधनेन व्रतग्रहणादारभ्य वर्षं यावत् क्षुत्परीषहसहनं वर्षसहस्रं च यावत् वाक्संयमं च सूचितवान्। न खलु आहारव्याहारविरहितैरेतद्विधैर्दिनमपि स्थातुं न शक्यते ॥ ११ ॥

---

१ 'कथेर्वज्जर-पज्जरोप्पाल-पिसुण-संघ-बोल-चव-जंप सीस-साहाः' इति (सिद्ध० ८-४-२) सूत्रेण कथ्-धातोर्वज्जरादेशः सिद्ध्यति ।

पू० अ०—वन्धूनां विभक्ता—विभागेनार्पिता वसुमती येन। वर्षं यावन्नैरन्तर्येण दत्तो द्रव्यसञ्चयो येन। हे 'धीर!' इत्यनेन वर्षं यावत् क्षुधासहनं सूचितवान्॥ ११॥

✲ ✲ ✲ ✲

ध० अ०—अथ कवि जिननइ दीक्षा अनन्तर शोभा आश्रयी स्तुति बोलइ। हे जगद्गुरो!–त्रिभुवनाधीश! त्वं जटाभिः शोभसे। हे त्रिभुवनस्वामी! तूं जटाए करी शोभई। किंवि०? प्रसाधितांसः–शोभालङ्कृतस्कन्धः। प्रसाधित–अलंकरीउ खब(भ?)हु छइ जे ताहरउ। किंविशिष्टाभिर्जटाभिः? कज्जलवत् कृष्णाभिः। काजलनी परिइं कृष्ण–काली छइं। अवगूढविसज्जिअरायलच्छिबाहच्छडाहिं व। उत्प्रेक्षते। अवगूह्य विसर्जित-राज्यलक्ष्मीवाष्पच्छटाभिः–शोकाश्रुभिरिव। जाणीइ कि(क?)रि अवगूही–आलिंगीनइ दीक्षानइ समइ विसर्जी–परिहरी राज्यलक्ष्मीबाष्पच्छटा–शोकना आंसू छइ॥ १२॥

ने० अ०—दीक्षाऽनन्तरं गुणान् आश्रित्याह–सोह०। हे जगद्गुरो! शोभसे त्वम्। किंविधः? प्रसाधितांसः–विभूषितस्कन्धः। इवोत्प्रेक्षते। उपगूढा–राज्यावस्थायामालिङ्गिता पश्चाद् विसर्जिता राज्यलक्ष्मीस्तस्या बाष्पच्छटाभिरिव॥ १२॥

चि० अ०—सोहसि०। दीक्षाऽनन्तरं विभूषितस्कन्धो जटाभिः–सुश्लिष्टकेशपद्धतिभिः अञ्जनश्यामलाभिः शोभसे। पूर्वं राज्यावस्थायां उपगूढा–आलिङ्गिता पश्चात् दीक्षासमये विसृष्टा या राज्यलक्ष्मीस्तस्या वाप्पच्छटाभिरिव–सकज्जलाभिरश्रुपरम्पराभिरिव। उचितश्च स्त्रीजनस्य तथाविधैर्नायकैः संयुज्य वियुज्यमानस्य दुःखात् वाष्पमोक्षः॥ १२॥

पू० अ०—अञ्जनश्यामलाभिर्जटाभिः प्रविभूषितस्कन्धः शोभसे। पूर्वं राज्यावस्थायामुपगूढा–आलिङ्गिता, दीक्षासमये विसृष्टा–परित्यक्ता या राज्यलक्ष्मीस्तस्याः बाष्पच्छटाभिरिव–सकज्जलाभिरश्रुपरम्पराभिरिव॥

✲ ✲ ✲ ✲

ध० अ०—अथ कवि जिननइं विहार उद्दिसी स्तुति बोलइ। हे नाथ! त्वया देशेषु अनार्या–म्लेच्छा उपशामं ग्राहिताः। हे नाथ! तइं बहली अडंव इला इत्यादि देशे अनार्य म्लेच्छ उपसामं–धर्म पमाड्या। किंविशिष्टेन त्वया? 'प्रपन्नमौनेन' प्रपन्न–आश्रयु मौनु छइ जीणइं तइं, मौनावलंवी हूतइं। जे तइं म्लेच्छ धर्मी मार्गि लगाड्या ए वात अपार आश्चर्यकारिणी वर्तइ। जेह कारण तउ कहूं–'अभणंत चिय कज्जं परस्स साहंति सप्पुरिसा' सत्पुरुषाः–सज्जना अभणन्त एव परस्य कार्यं साधयन्ति। सत्पुरुष–सज्जन माणुस अणवोलताइंजि अनेरानूं कार्य साधइं॥ १३॥

ने० अ०—विहारमुद्दिश्य स्तुतिमाह—उव०। हे भगवन्! त्वयोपशामिताः–उपशमं ग्राहिताः आर्यदेशतुल्या अनार्याः कृता म्लेच्छदेशेषु–'वहली'देशादिषु। किंविधेन त्वया? प्रपन्नमौनेन–

१ एतदवचूरिसमेते प्रतियुगले मूलगाथायां तु 'उवगूढ' इति पाठः।

विहरता तूष्णींभावेन । यो हि किल मौनीभवति सोऽन्योपदेशविधौ असमर्थः । त्वया पुनरित्थम्भूतेनापि उपशामिताः–समतां नीताः । अथवा किमत्र चित्रम्? सत्पुरुषाः–सज्जनाः अभणन्त एव–वचनमकुर्वन्त एव कार्य–समीहितं साधयन्ति–निष्पादयन्ति परस्य–आत्मव्यतिरिक्तस्य ॥ १३ ॥

चि० अ०—छद्मस्थावस्थाविहारमङ्गीकृत्याह स्तुतिम्–उवसामिया० । हे भगवन्! त्वया उपशामिता–उपशमं नीता अनार्या–म्लेच्छा देशेषु । किंविधेन त्वया? 'प्रपन्नमौनेन' । यो हि मौनी स्यात् सोऽन्यानुपदेष्टुमसमर्थः, त्वया पुनरित्थम्भूतेनापि उपशामिताः । अथवा किं चित्रम्? सत्पुरुषाः–सज्जनाः अभणन्त एव परस्य कार्यं साधयन्ति ॥ १३ ॥

पू० अ०—छद्मस्थावस्थामधिकृत्य गाथाद्वयमाह । प्रस्तावादनार्यदेशेषु प्रशमं नीता अनार्यजनाः, कृतमौनस्यापि भगवतस्तथाविधजगद्विलक्षणाकृतिदर्शनादेव तेषां मनःप्रशान्तता जाता इत्यर्थः । स्वभावश्चायमुत्तमानाम्–अभाषमाणा एव परस्य कार्यं साधयन्ति ॥ १३ ॥

✻ ✻ ✻ ✻

ध० अ०—अथ कवि जिनना चरणकमलनी सेवाफल तणइं दर्शन द्वारिइं स्तुति बोलइ । हे नाथ! तव मुनेरपि आश्रितौ नमि-विनमी खेचराधिपती जातौ । हे नाथ! तुझ मुनिनइं आश्रया कच्छ-महाकच्छना पुत्र नमि-विनमी क्षत्रियकुमार खेचराधिप–विद्याधरना नायक हुआ । ए वातनूं आश्चर्य कांई नहीं । यतः 'गुरुआण चलणसेवा न निप्फला होइ कइयावि' महतां चरणसेवा कदापि नैव निष्फला स्यात् । मोटा तणी चरणसेवा कदापि–कुणह(इ?) कालि निष्फल न[2] हुइ ॥ १४ ॥

ने० अ०—भवच्चरणसेवाफलमाह–मुणि० । मुनेरपि–व्रतिनोऽपि तवालीनौ–भवदाश्लिष्टौ नमि-विनमी–कच्छ-महाकच्छपुत्रौ खेचराधिपौ जातौ । गुरूणां–महतां चरणसेवा–पादपर्युपासना नैव–निष्फला भवति कदाचनापि ॥ १४ ॥

चि० अ०—ननु यदि आत्तमौनस्य भगवतो दर्शनादेव मनःप्रसादादयः स्युः,तदा किं तदुपासनाद् विशिष्टं फलं भवति न वेति आशङ्क्य आह–मुणिणो वि० । मुनेरपि तव आलीनौ–त्वदेकतानतया समाश्रितौ नमि-विनमी खेचराधिपौ जातौ, यतो गुरूणां पादसेवा न कदाचिदपि निष्फला–फलविकला भवतीति ॥ १४ ॥

पू० अ०—ननु यदि आत्तमौनस्य दर्शनमात्रादेव मनःप्रसादादयः स्युः, तत् किं तदुपासनात् किमपि विशिष्टतरमपि फलं सम्भाव्यमुतैतावदेवेत्याशङ्क्याह । मुनेः–लोकोत्तरमार्गप्रतिपन्नस्यापि । लीनौ–त्वदेकतानतया समाश्रितौ नमि-विनमी खेचराधिपौ जातौ । यतो गुरूणां विश्वमहनीयमहिम्नां पादसेवा न क्वापि फलविकला भवति ॥ १४ ॥

✻ ✻ ✻ ✻

१ छायाऽर्थं दृश्यतां ६१तमं पृष्ठम् । २ 'नजि हुइं' इति ख–पाठः ।

ध० अ०—अथ कवि जिननी पारणविधि बोलइ । हे नाथ! तस्य श्रेयांसस्य भद्रं–कल्याणमस्तु येन तव देहो वर्षान्ते–वत्सरावसाने तपःशोषितो निराहारो–भोजनरहितो निर्वापितः–शीतलीकृतः। जिणइं श्रेयांसि ताहरउ वर्षांति–वरिस प्रांति तपि सोसव्यु निरा-हारो–भोजनरहित देह निर्वापिउ–शीतल कीधउ । केनेव? मेघेनेव । यथा मेघेन वनद्रुमाः–अरण्यवृक्षाः ग्रीष्मातपेन शोषिता निराधारा–जलसेकरहिता निर्वाप्यन्ते–शीतलीक्रियन्ते। कुणनी परिइं? मेघनी परिइं । जिम मेघि वनवृक्ष–अरण्यनउ वृक्ष ग्रीष्मतापिइं सोसव्यु निराधार निर्वाप्यते–सीतल कीजइ ॥ १५ ॥

ने० अ०—पारणविधिमङ्गीकृत्याह–भद्दं० । भद्रं–कल्याणमभूत् । से–तस्य श्रेयांसस्य येन त्वं निर्वापितः–सन्तर्पितः–शीतलीकृतो वर्षान्ते–संवत्सरावसाने । किंविधः सन्? तपःशोषित-देहो निराहारो–भोजनविकलः । केनेव क इत्याह—मेघेनेव वनद्रुमः–अरण्यवृक्षः । कोऽर्थः? यथा मेघेन वनद्रुमः तापेन–ग्रीष्मेण शोषितो निराहारो–जलादिपानविकलो वर्षान्ते–वृष्टिपर्यन्ते शीतलः क्रियते तथा भगवानपि येनेति भावः ॥ १५ ॥

चि० अ०—आद्यपारणकविधिमङ्गीकृत्य स्तुतिमाह–भद्दं से० । भद्रं–कल्याणं भूयात् 'से' तस्य श्रेयांसस्य, येन त्वं निर्वापितः–शीतलीकृतो वर्षान्ते–संवत्सरावसाने । किंविधः सन्? तपः-शोषितः तथा निराहारो–भोजनविकलः । मेघेनेव वनद्रुमः । कोऽर्थः? यथा मेघेन वनद्रुमः तापेन–ग्रीष्मेण शोषितो निराधारो जलादिपानविकलत्वाद् वर्षान्ते–वृष्टिपर्यन्ते शीतलीक्रियते तथा त्वमपि ॥ १५ ॥

पू० अ०—आद्यपारणकमाश्रित्याह । येन त्वं संवत्सरान्ते निर्वापितः–संतर्पित इक्षुरसैः । आहाररहितः, अत एव तपसा शोषितः । यथा मेघेन कान्तारपादपो निर्वाप्यते तापेन–ग्रीष्मेण शोषितः वर्षणं–वर्षस्तस्यान्ते वृष्टिं विधायेत्यर्थः । सोऽपि निराधारः, आलवालविकलत्वात् ॥ १५ ॥

✻ ✻ ✻ ✻

ध० अ०—अथ कवि जिननइं केवलज्ञान उद्दिसी स्तुति बोलइ । हे नाथ! त्वयि उत्पन्नविमलज्ञाने–केवलज्ञाने सति भुवनस्य–त्रिभुवनस्य मोहो विगलितो–विलयं गतः । हे नाथ! तइ उपंनइं तइं केवलज्ञानि हूंतइं भुवन–त्रिभुवन तणउ मोह–अज्ञानरूप विलय थ्यूं । सयलुग्गयसूरे वासरम्मि गयणस्स व तमोहो । कस्येव? गगनस्येव । यथा गगनस्य सकलोद्गत-सूर्ये वासरे–सम्पूर्णोदयप्राप्ते सूर्ये तमओघो विलयं याति । कुणनि परिइं[1]? गगन–आकाशनी-परि । जिम गगन–आकाश रहइं संपूर्ण उदय पामिइं सूर्यि इसइ दिवसि तम–पापनउ ओघ–समूह विलइ जायइ[2] ॥ १६ ॥

---

१ 'परि' इति ख-पाठः । २ 'जाई' इति क-पाठः ।

ने० अ०—ज्ञानकल्याणकमधिकृत्याह—उप्पन्न० । हे नाथ ! त्वयि उत्पन्नोज्ज्वलकेवलज्ञाने सति भुवनान्तर्वर्तिभव्यजातस्य मोहः–अज्ञानं विगलितो–विनष्टः । यथा सकलोद्गतसूर्ये वासरे सति गगनस्य तमौघो विलीयते । इहोत्पादोद्गमयोर्ज्ञानभानुमतोर्जिनेशवासरयोर्भुवनगगनयोर्मोहतमसोः परस्परमुपमानोपमेयता ॥ १६ ॥

चि० अ०—अथ भगवतो ज्ञानकल्याणकमाश्रित्य स्तुतिमाह–उप्पन्न० । उत्पन्नविमलज्ञाने त्वयि भुवनान्तर्मोहो विगलितः । इह चासङ्गतिरलङ्कारः, अन्यत्र कारणं अन्यत्र कार्योत्पत्तिः । यस्य ज्ञानमुन्मीलति, तस्यैव मोहो–मूर्च्छा विगलति; अत्र तु ज्ञानं भगवत उन्मीलितं, मोहस्तु जनस्य विगलितः । सकलोद्गतसूर्ये वासरे सति यथा गगनस्य तमोगणः ॥ १६ ॥

पू० अ०—ज्ञानकल्याणकमाश्रित्याह । त्वयि उत्पन्नज्ञाने भुवनस्य मोहो विगलितः । इह चासङ्गतिरलङ्कारः, अन्यत्र कारणमन्यत्र कार्योत्पत्तिः । यस्य किल ज्ञानमुन्मीलति तस्यैव मोहो–मूर्च्छा विगलति, अत्र तु ज्ञानं भगवत उन्मीलितं, मोहस्तु जगतो विगलितः । उपमामाह–सकलोद्गतसूर्ये वासरे सति यथा गगनस्य तमोगणो विलीयते । इहोत्पादोद्गमयोर्ज्ञानभानुमतोर्जिनेश्वरवासरयोर्भुवनगगनयोर्मोहतमसोः परस्परमुपमानोपमेयता ॥ १६ ॥

* * * *

ध० अ०—अथ कविजिननइं केवलज्ञान ऊपना पूठिं स्यूं हवूं ते वोलइ छइ–हे नाथ ! भरतेन राज्ञा त्वमपि पूजावसरे–पूजाप्रस्तावे प्राप्ते सति चक्ररत्नस्य सदृशो दृष्टः । हे स्वामी ! भरतेश्वर राय तूणीहइ पूजानइ अवसरि पामिइं हूंतइं चक्र–प्रहरणविशेष रहइं सरीषउ दीठउ । विषयाग्रहग्रस्त मनुष्य रहइं इहां किस्यूं कार्य आश्चर्य एह कारण कहिउं । 'विसमा हु विसयतिण्हा गुरुयाण वि कुणइ मइमोहं' हु–स्फुटं–निश्चितं विषमा विषयतृष्णा वर्तते । हु–स्फुट–निश्चइं विषमा विषयनी तृष्णा वर्तइ । गुरुकाणामपि–महतामपि मतिमोहं–बुद्धेरन्यथात्वं करोति । गुरुक–मोटा मनुष्यनइ मतिमोह–बुद्धिनूं अन्यथापणउं करइ ॥ १७ ॥

ने० अ०—पूजाऽवसरे प्राप्ते सदृशं–तुल्यं दृष्टः–परिकल्पितस्त्वमपि, आस्तां तावत् अन्यः, चक्रस्य–प्रहरणविशेषस्य नृपभरतेन । दुर्जयैव विषयतृष्णा । हिरवधारणे । यतो महतामपि विपर्ययेणान्यथाभावं विधत्ते ॥ १७ ॥

चि० अ०—अथ पूजादिस्वरूपमाह–पूआवसरे० । ततः किमित्याह–पूजाऽवसरे–केवलमहिमप्रस्तावे चक्रस्य–प्रहरणविशेषस्य सदृशस्त्वं भरतेन नृपतिना दृष्टः–परिकल्पितः, यद्वा 'हु' स्फुटं–निश्चितं विषयाणां–शब्दरूपादीनां तृष्णा–वाञ्छा विषमा–दुर्जयैव । कुतः ? गुरुकाणामपि करोति मतिमोहं–बुद्धेरन्यथात्वम् ॥ १७ ॥

पू० अ०—पूजा–केवलिमहिमापक्षे अष्टाह्निकामहोत्सवस्तयोरवसरे चक्रेण सदृशो भरतेन चेतसि चिन्तित इत्यर्थः । दिट्ठो चक्कस्स तं सीति त्वमपि तथा तथा परिचितप्रभावातिशयोऽपीत्यर्थः । दुर्जयैव विषयतृष्णा । तुरवधारणे । यतो महतामपि बुद्धिविपर्ययेणान्यथाभावं विधत्ते ॥ १७ ॥

* * * *

ध० अ०—अथ कवि जिननइं समवसरण उद्दिसी स्तुति बोलइ। हे नाथ! तव प्रथमसमवसरणसमये आग्नेयी दिक् केवलसुरवधूकृतोद्द्योता जाता। हे स्वामी! ताहरइ समवसरणनइ समइ आग्नेय कोणनी दिसि केवलज्ञान करी सुरवधू-देवाङ्गनाए कृत-कीधउ उद्द्योत इसी हुई। सेवासयमागयसिहि व। उत्प्रेक्षते-सेवाशयेन-त्वदाराधनबुद्ध्या आगतः शिखीव। जाणीइ[1] किरि सेवामिसिइं-तुझ आराधवानी बुद्धिइं आव्यु शिखी-वैश्वानर छइ ॥ १८ ॥

ने० अ०—समवसरणमुद्दिश्य स्तुतिमाह—पढम०। प्रथमसमवसरणमुखे-आद्यसमवसृत्यारम्भे तव-भवतः आग्नेयी दिक् केवलसुरवधूकृतोद्द्योता। केवला याः सुरवध्वः-विबुधाङ्गनास्ताभिः कृत उद्द्योतो यस्याः। तद्विदिशि पर्षत्त्रयं भावि, परं तदा साधुसाध्वीरहिता सा। अत एव केवलपदोपादानम्। उत्प्रेक्षा-सेवागतशिखीव। यद्वा सेवाशयेन-आराधनबुद्ध्या आगतश्चासौ शिखीव, स्वदिक्पतित्वात् ॥ १८ ॥

चि० अ०—समवसरणस्थितिविशेषमाह-पढम०। केवलोत्पत्तेरनन्तरं यत् प्रथमं समवसरणं-धर्मदेशनास्थानं तदेव जगदुत्सवहेतुत्वात् महस्तस्मिन्, केवला-इतरनरादिजातिव्यतिरिक्ता याः सुरवध्वस्ताभिः कृत उद्द्योतो यस्याः। तस्यां पर्षत्त्रयं भविष्यति-आद्यायां साधवः, अन्तरा वैमानिका देव्यः, अन्ते च साध्व्यः। तदा च तीर्थस्याप्रवृत्तत्वेन साधुसाध्वीविरहितास्ता एव सन्ति, अतः केवलोपादानम्। जाता आग्नेयी दिक्-पूर्वदक्षिणयोरन्तरालवर्तिनी विदिक्। उत्प्रेक्षामाह-स्वयं सेवोपनीताऽग्निदेवतेव, यद्वा सेवाशयेन-सेवाऽभिप्रायेण आग्नेयीविदिशः स्वामी शिखी सुरी तेजःपुञ्जव्याजेन प्रादुर्बभूव ॥ १८ ॥

पू० अ०—समवसरणस्थितिविशेषमाह-केवलोत्पत्तेरनन्तरं यत् प्रथमं समवसरणं तदेव जगदुत्सवहेतुत्वात् महस्तत्र, यद्वा प्रथमसमवसरणस्य मुखे-प्रारम्भे। आग्नेयी दिक् केवला या. सुरवध्वस्तासां देहप्रभाभिः कृत उद्योतो यस्याः। तस्यां पर्षत्त्रयं भविष्यति-आद्यायां साधवः, अन्तरा वैमानिक्यः, अन्ते साध्व्यः। तदा तीर्थस्याप्रवृत्तत्वेन साधुसाध्वीविरहितास्ता एव, अतः केवलोपादानम्। उत्प्रेक्षामाह-स्वयं सेवोपगता अग्निदेवता इव, यद्वा सेवाशयेन-सेवाभिप्रायेण तत्रेन्द्रादिसुरगणं सेवागतमालोक्याग्नेय्या दिश ईशः शिखी सुरी तनुतेजःपुञ्जव्याजेनात्मसुरगणैः सह सेवायै अस्यां दिशि प्रादुर्बभूव ॥ १८ ॥

卐 卐 卐 卐

ध० अ०—अथ कवि तापसागम उद्दिसी जिननी स्तुति बोलइ। हे नाथ! प्रथमतापसैः-आद्यजटाधारिभिस्तपस्विभिस्तव प्रथमे दर्शने मुखरागः स्थगितः। हे स्वामी! प्रथम तापसे-पहिले जटाधारीए तपस्वीए ताहरइ पहिलइ दर्शिनि मुखराग स्थगिउ-आच्छादिउ। किंविशिष्टो मुखरागः? 'गृहीतव्रतभङ्गमलिनः' गृहीत-लीधउं जे तुझ साथिइं व्रत तेहनइं भंगि-भांजिवइ करी मलीन-मयलु[2] छइं। किंविशिष्टैस्तापसैः? नूनं-निश्चितं दूरावनतैः। नूनं-निश्चिइं दूर-वेगला अवनत-नम्या छइ ॥ १९ ॥

१ 'जाणीयइ' इति ख-पाठः। २ 'मयला' इति ख-पाठः।

ने० अ०—अधुना तापसागममुद्दिश्य स्तुतिमाह—गहिय० । स्थगितः–अधःकृतो मुखरागो–वदनद्युतिर्येन । कैः ? प्रथमतापसैः–कच्छ–महाकच्छवर्जैर्जटाधारिभिः । कीदृशो मुखरागः ? 'गृहीतव्रतभङ्गमलिनः' गृहीतं यद् व्रतं भगवता सह तस्य भङ्गः–अनासेवनारूपः तेन मलिनः–कलुषितः । नूनं–निश्चितम् । किंविधैः ? दूरादवनतैः । क सति ? तव दर्शने–भवदवलोकने । प्रथमे–आद्ये ॥ १९ ॥

चि० अ०—जिनेन सह प्रव्रजितानां सामन्तादीनां समवसरणोपगतानां वक्तव्यतामाह–गहिय० । हे त्रिभुवनगुरो ! प्रथमदर्शने प्रथमोत्पन्नतापसैः कच्छ-महाकच्छवर्जैः, दूरम्–अत्यर्थं, अवनतैः नूनं–निश्चितम्, स्वस्य–मुखरागो–मुखच्छाया स्थगितः–अन्तरितः, यतो गृहीतव्रतभङ्गमलिनः। अयमाशयः–तैस्त्रपाभङ्गमन्थरैः स्वमुखं दर्शयितुमसमर्थैः प्रणामव्याजेनावनतिरङ्गीकृता ॥ १९ ॥

पू० अ०—तव प्रथमदर्शने प्रथमोत्पन्नतापसैः कच्छ–महाकच्छवर्जैः दूरम्–अत्यर्थमवनतैर्नूनं स्वस्य मुखच्छाया स्थगिता, यतो गृहीतव्रतभङ्गेन मलिना–कलुषा । अयमाशयः–न तैर्भक्त्या भगवान् नतः, किन्तु तथा जगज्जनसमक्षं भगवता समं व्रतमादाय निःसत्त्वैस्तापसत्वमङ्गीकृतमिति त्रपया स्वमुखं दर्शयितुमसमर्थैः प्रणामव्याजेन नतिराश्रिता ॥ १९ ॥

* * * *

ध० अ०—अथ कवि तीहं तपस्वीनइ समागमि किसिउ हूओ ते वात कहइ छइ । हे नाथ ! तैस्तापसैः परिवेष्टितेन त्वया क्षणं कुलपतेः शोभा व्यूढा । हे स्वामी ! तेह तपस्वीए परिवेष्टित–वींटिइं तइं क्षण एक कुलपति–मूलगा तपस्वीनी शोभा वही, पछइ तेहे तपस्वीए दीक्षा लीधी । किंविशिष्टेन त्वया ? विकटांशस्थलघोलमानजटाकलापेन । विकट–विस्तीर्ण जे अंशस्थल–खवा(भा?) तिहां घोलमान–हींडोला समान जटासमूह छइं ॥ २० ॥

ने० अ०—तापसागमे भगवान् किंविधो जातः–तेहिं० । तैस्तापसैः परिवेष्टितेन–परिवारितेन । चः पुनरर्थे । त्वया व्यूढा–धृता स्तोककालं शोभा–श्रीः । कस्य ? कुलपतेः । पश्चात् ते प्रव्रज्यां जगृहुरित्यभिप्रायः । किंविधेन त्वया ? 'विकटांसस्थलघोलमानजटाकलापेन' ? विकटौ–विस्तीर्णौ यावंसस्थलौ तयोर्घोलमानौ जटाकलापौ–जटाप्राग्भारौ यस्य तेन ॥ २० ॥

चि० अ०—तत्समागमेन भगवान् किंविधो जात इत्याह–तेहिं० । तैः तापसैः परिवेष्टितेन–परिवारितेन त्वया श्रीकुलपतेः शोभा व्यूढा–धृता क्षणं–स्तोककालं पश्चात् ते प्रव्रज्यां जगृहुरित्यर्थः । किंविधेन त्वया ? विकटांसस्थलघोलमानजटाकलापेन ॥ २० ॥

पू० अ०—तैः परिवेष्टितेन त्वया क्षणं पश्चात् भगवदुपदेशेन श्रमणलिङ्गस्याङ्गीकृतत्वात् कुलपतेः–तापसाचार्यस्य शोभा व्यूढा–प्राप्ता । विकटौ–विस्तीर्णौ यौ स्कन्धप्रदेशौ तयोः प्रेङ्खन् जटाकलापो यस्य ॥२०॥

* * * *

---

१ 'घोलइ' इति ख-पाठः ।

ध० अ०—अथ स्वामीनउ रूपातिशय बोलइ—हे नाथ! ये तव रूपं पश्यन्तो हर्षपरिपूर्णा न भवन्ति। हे स्वामी! जे जीव ताहरूं रूप जोअतां हरिषि परिपूर्ण हृदय न हुइं। ते समनस्का अमनस्काः—स्थावरा एव वर्तन्ते। ते समनस्क—मन सहित छइ अमनस्क—स्थावर इति वर्तइं। परं यदि ते केवलिनो न स्युः। पणि जइ ते केवलज्ञानीया न हुइं। एतलइं केवलज्ञानीनइ मन न हुइं ॥ २१ ॥

ने० अ०—रूपातिशयं वर्णयन् स्तुतिमाह—तुह०। ते—तव (रूपं) पश्यन्तो न भवन्ति प्राणिनः ये हे नाथ! हर्षपरिपूर्णाः ते समनस्का अपि गतमनस्का एव, एकेन्द्रिया एवेति भावः; परं ते द्रष्टारो यदि केवलिनो न स्युः। ननु किं समनस्काः केवलिनो भण्यन्ते येनेदमुच्यते?। तथाचागमः—"अमनस्काः केवलिनः", सत्यम्, समणा वि त्तिप्राकृतशब्देन तेऽप्युच्यन्ते, इ(अ?)तस्तेषां व्युदासः ॥ २१ ॥

चि० अ०—रूपातिशयं वर्णयितुमाह—तुह रूवं०। हे नाथ! तव रूपं पश्यन्तो ये न भवन्ति हर्षपरिपूर्णाः ते समनस्काः—संज्ञिनोऽपि गतमनस्काः—असंज्ञिन एव। किं सर्वेषामियमेव गतिरित्याह—'ते केवलि०' यदि ते केवलज्ञानिनो न भवेयुः। केवलिनस्तु 'समणा वि' श्रमणलिङ्गधारिणोऽपि अमनस्का एव, भावमनोवैकल्येन। क्षीणमोहत्वेन च तेषामद्भुतवस्तुसाक्षात्कारेऽपि हर्षोत्पत्तेरभाव एव ॥ २१ ॥

पू० अ०—ये प्राणिनस्तव रूपं प्रेक्षमाणा हर्षभरनिर्भरा न स्युः, ते समनस्काः—संज्ञिनोऽपि गतमनस्काः—असंज्ञिन एव, यदि केवलज्ञानिनो न भवेयुः। विरोधश्चात्र—ये समनस्कास्ते कथममनस्काः? केवलिनस्तु समनस्का अपि भावमनोवैकल्येनामनस्का एव स्युः। क्षीणमोहत्वेन च तेषां तथाविधाद्भुतवस्तुनः सदा साक्षात्कारेऽपि हर्षोत्पत्तेरभाव एव ॥ २१ ॥

ॐ ॐ ॐ ॐ

ध० अ०—अथ कवि जिनमाहात्म्यनइं द्वारि स्तुति बोलइ। हे नाथ! यैर्गुणैः अन्ये—हरि-हरादयो देवाः निःसामान्यां समुन्नतिं प्राप्ताः। हे स्वामी! जेहे गुणे अनेरा हरिहरादिक देवता निःसामान्य—निरुपमान समुन्नति—समृद्धि पाम्या। ते गुणास्तव सङ्कथासु मम हास्यं ददति। ते गुण ताहरी वार्तानइ विषइ मुझनइं हासुं दिइं ॥ २२ ॥

ने० अ०—भगवद्गुणद्वारेण स्तुतिमाह—पत्ता०। यैर्गुणैरन्यदेवता—हरि-हरादयः समुन्नतिं—समृद्धिं निःसामान्यां—निरुपमामसाधारणं प्राप्ताः, ते गुणा मम हासं—अवज्ञारूपं ददति—जनयन्ति। कासु? तव 'गुणसंकहासु' सत्सु तव गुणानां भवदाचर(ण)रूपाणां सम्यक् कथा वर्तमाना(वार्ता?)स्तासु ॥ २२ ॥

---

१ 'रहइं' इति ख-पाठः।

चि० अ०—विभोर्गुणानुगुणां स्तुतिमाह–पत्ता० । यैर्जगत्कर्तृत्वादिभिर्गुणैरन्यानि (हरि)-हरादीनि दैवतानि । प्राकृतत्वात् पुंस्त्वम् । ते तथाविधाभिरामत्वद्गुणग्रामसङ्कथासु क्रियमाणासु कथमेषामेवंविधा गुणगणा मम हास्यं न ददति, रागद्वेषादिदोषोपेतत्वात् । एतच्च कलङ्कस्याप्युपरि चूलिकाकल्पम्, यदेवंविधैरपि तानि तानि दैवतानि विश्वे निस्सामान्यां समुन्नतिं–पूजां प्राप्तानि स च तदाराधकानामेव विचारचातुरीप्रपञ्चः ॥ २२ ॥

पू० अ०—यैर्जगत्कर्तृत्वादिभिर्गुणैरन्यानि दैवतानि निःसामान्यां समुन्नतिम्–उच्चैः पदवीं प्राप्तानि त्वद्गुणसङ्कथासु क्रियमाणासु ते गुणा मम हास्यं ददते । प्राकृतत्वात् पुंस्त्वम् ॥ २२ ॥

✻ ✻ ✻ ✻

ध० अ०—अथ कवि स्वामीना निर्दोषपणा कहिवानइं मुखिइं प्रशंसा बोलइ । हे जिन ! वचनकुशला अपि मत्सरिणस्तव निन्दाऽवसरे वाचा बालिशायन्ते । हे स्वामी ! वचननइ विषइ कुशलइ मच्छरी परवादी ताहरइं निन्दावसरि वाणीहं करी बालिश–मूर्खपणुं आचरइं । किंविशिष्टस्य तव ? दोषरहितस्य । दोषरहित छैतइ । किंविशिष्टया ? भग्नप्रसरया । भग्न–भागओ प्रसर छइ जीणं ॥ २३ ॥

ने० अ०—भगवतो निर्दोषताकथनमुखेन श्लाघामाह—दोस० । हे जिन ! दोषरहितस्य–कलङ्कवर्जितस्य तव निन्दाऽवसरे–परिभवप्रस्तावे बालिशायन्ते–मूर्खा इवाचरन्ति । के ? मत्सरिणः–परपरिवादिनः । कया ? गिरा । किंविधया ? त्वन्निर्दोषत्वात् भग्नः प्रसरः–प्रवेशो यस्याः सा (तया) । वचनकुशला अपि ॥ २३ ॥

चि० अ०—अधुना भगवतो निर्दोषताकथनेन श्लाघामाह–दोसरहिअस्स० । हे जिन ! दोपरहितस्य–अज्ञानादिवर्जितस्य तव निन्दाऽवसरे–दोषप्रस्तावे वचनकुशला अपि–स्थानान्तरेषु उक्तिनिपुणा अपि मत्सरिणो बालिशायन्ते–मूर्खा इवाचरन्ति । कया ? वाचा–गिरा । किंविधया ? भग्नप्रसरया–भग्नप्रवेशया, निर्दोषत्वाद् भगवतः ॥ २३ ॥

पू० अ०—हे जिन ! दोषरहितस्य तव निन्दाप्रस्तावे पूर्वं वचनकुशला अपि तदवसरे वाचा भग्नप्रसरया मत्सरिणो बालिशायन्ते । अयमाशयः–दुर्जनाः सूच्चिरन्ध्रमात्रमपि दूषणं ज्ञात्वा असन्त्यपि वचनान्यारोपयितुमुपक्रमन्ते । त्वयि तु परमाणुमात्रमपि दोषमपश्यन्तो हताशा एव जाताः । अत्र च जिनेति साभिप्रायम्, यतो रागादिजेतृत्वाज्जिनः । न च रागादिदोषव्यतिरिक्तः कोपादिहेतुरस्ति ॥ २३ ॥

✻ ✻ ✻ ✻

ध० अ०—अथ कवि परमेश्वर रहइं वीतरागपणूं अंगीकरी स्तुति बोलइ । हे भगवन् ! त्वन्मनः तपसा तापितमपि शृङ्गारवने नाश्रितम् । हे नाथ ! ताहरूं मन तपश्चरणिइं तापिव्यूं इ हूंतूं शृङ्गार वनि न वस्यूं । किंविशिष्टे शृङ्गारवने ? अनुरागपल्लववति । अनुराग

१ 'छइ' इति ख-पाठः ।

इति भणित पल्लव-किसलय संयुक्त छइ जीणं । पुनः किं० ? रतिवल्लिस्फुरद्धास्यकुसुमे । इति इंति भणित स्फुरन्ती-प्रसरन्ती हास्यरूपिणी वेली छइ जीणइ ॥ २४ ॥

ने० अ०—भगवतो वीतरागतां स्तौति—अ० । हे भगवन्! त्वन्मनः तापितमपि शृङ्गार-वने-भोगकानने नाश्रितं-नै निवासः कृतः । किम्भूते वने ? दर्शनस्य श्रवणस्य चानु-पश्चाज्जायत इत्यनुरागः स एव पल्लवौघो विद्यते यस्य तत् तथा तस्मिन् अनुराग[एव]पल्लववति । तथा रतिर्वल्लीव यत्र तच्च तत् स्फुरद्धासकुसमं च यस्मिन् । यद्वा रतिरेव वल्ली तस्यां स्फुरद्धासकुसुमं यत्र । यो हि किलातपे ग्रीष्मेण तापितो भवति स च वनमाश्रयति । त्वन्मनस्तु तपसा तापितमपि शृङ्गारवने नाश्रितम् ॥ २४ ॥

च्चि० अ०—भगवतो वीतरागतां स्तौति—अथानङ्गदर्पदलनोत्तालतां विभोरभिधित्सुरादावेव तदाश्रयभूते शृङ्गारवैरङ्गिकत्वमाह—अणु० । अनुराग एव पल्लवौघस्तेन पल्लववति । रतिः—अनुरागः तस्यैव सन्ततिः सैव वल्लिस्तस्यां स्फुरत्—विकस्वरं हास्यं एव—स्मितमेव कुसुमं यत्र । तपोभिस्तापितमपि—वाढं तप्तमपि तव मनः शृङ्गारवने न लीनम्, प्राकृतत्वात् पुंलिङ्गता ॥ २४ ॥

घू० अ०—अनुराग एव पल्लवौघस्तद्वति । रतिः—अनुरागस्यैव नैरन्तर्येण प्रवर्धमाना सन्ततिः सैव वल्लिस्तस्यां स्फुरत् स्मितमेव कुसुमं यत्र । एवंविधे शृङ्गारवने तव मनः तपोभिस्तप्तमपि न समाश्रितम् । प्राकृतत्वात् पुंस्त्वम् ॥ २४ ॥

* * * *

ध० अ०—अथ कवि मयणनिराकरण जिननी स्तुति बोलइ । हे नाथ ! हरि-हराभ्यां यस्य मदनस्य आज्ञा शीर्षे-मस्तके शेषेव अवलम्बिता-धृता । हे नाथ ! हरि-हरादिक देवे जेह मदन-कंदर्प तणी आण मस्तकि सेसनी परि धरी-आरोपी । सोऽपि मदनः तव ध्यानज्वलने मदनमिव विलीनः-विलयं गतः । तेहइ मदन-कंदर्प ताहरा ध्यान-रूपीया ज्वलन-वैश्वानरमाहि मीणनी परिइं विलइ ग्यूं ॥ २५ ॥

ने० अ०—मदननिराकरणद्वारेण स्तुतिमाह—आ० । आज्ञा-शासनं यस्य मदनस्य विलगिता-अनेकार्थत्वात् धातूनां सप्रणयं आरोपिता-रचिताऽऽश्रिता मस्तके हरि-हराभ्यामपि शेषे-व-मालेव । सोऽपि मारस्तव ध्यानज्वलने मदनमिव-मीणमिव विगलितः-प्रलयं गतः ॥ २५ ॥

च्चि० अ०—इदानीं मदननिराकरणेन भगवतः स्तुतिमाह—आणा० । आज्ञा-शासनं यस्य मारस्य विलम्बिता मूर्ध्नि-शिरसि हरि-हराभ्यामपि । प्राकृतत्वाद् द्विवचने बहुवचनम् । शेषेव-निर्माल्यमिव । सोऽपि-जगत्त्रयेऽपि अप्रतिहतपराक्रमो मदनो भवद्ध्यानज्वलने मदनमिव विलीनः-प्रलयं गतः ॥ २५ ॥

---

१-२ 'इजि' इति ख-पाठः । ३ अशुद्धं स्थलमिदमिति प्रतिभाति, यद्यपि पाठोऽयं वर्तते ८१तमे पृष्ठेऽपि; 'निवासमकृत' इति पाठः समीचीनः स्यात् । ४ अयं तु गूर्जरदेशीयः शब्दः ।

पू० अ०—यस्य कामस्याज्ञा शीर्षे विलगिता–अनेकार्थत्वाद् धातूनां सप्रणयमारोपिता शेषेव–इष्टदेवतानिर्माल्यमिव । सोऽपि जगत्त्रयेऽपि अप्रतिहतपराक्रमो मदनो भवतो ध्यानधनञ्जये मदनमिव–इक्षु(सिक्थ?)-कमिव विलीनः ॥ २५ ॥

* * * *

ध० अ०—अथ कवि विषयझू(रू?)झार जिननइ विषइ असमर्थपणउं उद्दिसी स्तुति बोलइ । हे नाथ! मृगाक्षीणां–स्त्रीणां दृष्टिक्षोभाः तव विषये नवरं–केवलं निरभिमाना–अभिमानरहिता बभूवुः । मृगाक्षी–स्त्री तणा दृष्टिक्षोभ ताहरइ विषइ नवर–केवलूं निरभिमान–अभिमान रहित हूआ । किं० योधाः? जगद्दर्पभञ्जनोत्तानाः । जग–विश्वना दर्प भांजिवानइ विषइ उत्तान–दक्ष छइ । पुनः किं० ? मन्मथनरेन्द्रयोधाः । कंदर्परूपीया रायना झूझार छइ ॥ २६ ॥

ने० अ०—अधुना मदनयोधानां भगवद्विषयेऽसामर्थ्यप्रतिपादनद्वारेण स्तुतिमाह—पइं० । हे भगवन्! त्वय्येव विषये, 'नवरि'शब्दस्यावधारणार्थत्वात् । निरभिमाना–निरहङ्कारा जाताः । के ते? दृष्टिक्षोभाः–प्रीतिनेत्रविकाराः मृगाक्षीणां–विशिष्टयोषिताम् । मन्मथनरेन्द्रयोधा–मारनृपतिभटाः कीदृशाः? जगद्दर्पभञ्जनोत्ताना–भुवनप्रभावजयोच्छेकाः ॥ २६ ॥

चि० अ०—अधुना मदनयोधानां भगवद्विषयेऽसामर्थ्यप्रतिपादनद्वारेण स्तुतिमाह–पइं० । हे भगवन्! त्वय्येव विषये, 'नवरि'शब्दस्यावधारणार्थत्वात् निरभिमाना जाताः । के ते? मृगाक्षीणां–योषितां दृष्टिक्षोभाः–प्रीतिनयनविकाराः । मन्मथनरेन्द्रयोधाः कीदृशाः? जगद्दर्पस्य भञ्जनं–दलनं तेनोत्ताना–उद्धताः । अत्र च 'अणुराय'गाथया मन्मथराज्ञो राजधान्याः शृङ्गाररसस्य विक्षेप उक्तः । 'आणा जस्स' इत्यादिना तदीशस्मरस्य दलनम् । 'पइं नवरि' इत्यादिना तत्सैनिकानामहङ्कारनिरासः । इति गाथात्रयसमुदायार्थः ॥ २६ ॥

पू० अ०—मन्मथनरेन्द्रयोधाः । के ते? मृगाक्षीणां दृग्विक्षेपाः । त्वयि नवरं नष्टाहङ्काराः सञ्जाता योधाः । किं०? जगच्छब्देन जगद्वर्तिनो जनास्तेषां दर्पभञ्जनेनोत्तानाः–समुद्धरकन्धराः । अत्र च 'अणुराय०' गाथया मन्मथराज्ञो राजधान्याः शृङ्गारस्तस्य विक्षेप उक्तः । 'आणा ज०' इत्यादिना तदीशस्य मारस्य क्षेपः । 'पइं०' इत्यादिना 'हतं सैन्यमनायकम्' इति न्यायेन तत्सैनिकानां न्यत्का(क्का)रः प्रभुणा कृतः । इति गाथात्रयसमुदायार्थः ॥ २६ ॥

* * * *

ध० अ०—अथ कवि जिनशासनप्रभावनी स्तुति बोलइ । हे धर्मसारथे!–धर्मस्यन्दनप्रवर्तक! तव प्रवचने दृष्टे सति विषमौ रागद्वेषौ नवरं–केवलं तिष्ठन्तौ–निवर्तेते । धर्मरूपीया स्यंदन–रथ प्रवर्त्ताविवा धर्मसारथि छं । ताहरइ प्रवचनि–शासनि दीठइं हूंतइं विसमा राग नइ द्वेष नवर–केवलुं तिष्ठइं–निवर्तइं । किं कुर्वन्तौ रागद्वेषौ? काविव? तुरङ्गमाविव । यथा

विषमौ तुरङ्गमौ भव्यसारथितो(प्रा?)जनके अनः–शकटं उत्पथेन नयन्तौ तिष्ठतः। जिम दुर्दांत घोडा भला सारथिनइं ता(प्रा?)जणइ दीठइं शकटि उन्मार्गि लेयता निवर्तइं ॥२७॥

ने० अ०—वचनप्रभावमाह—विस० । हे धर्मसारथे!–धर्मस्यन्दनप्रवर्तक! तव प्रवचने दृष्टे सति यौ विषमौ रागद्वेषौ तौ नवरं–निश्चितं तिष्ठतः–निवर्ततः । किं कुर्वन्तौ? नयन्तौ मनः–चित्तं उत्पथेन–उन्मार्गेण । काविव? तुरगाविव । कोऽर्थः? यथा विषमौ तुरगौ–दुर्दमौ वाजिनौ प्रधानसारथिप्राजनके–तोत्रे दृष्टे उत्पथेन अनः–शकटं नयन्तौ तिष्ठतः–स्वस्थौ भवतः तथा रागद्वेषावपीति भावः ॥ २७ ॥

चि० अ०—अथ भगवत्प्रवचनमाह—विसमा० । हे धर्मसारथे!–धर्मस्यन्दनप्रवर्तक! विषमौ रागद्वेषौ ज्ञानाद्यात्मको मोक्षमार्गस्तस्मादितर–उत्पथस्तेन देहिनां मनो नयन्तौ, नवरं–केवलं तवैव प्रवचने दृष्टे सति अवतिष्ठेते, न उत्पथे प्रेरयतः । यथा दुर्दान्तौ तुरगौ अनः–शकटं रथमुत्पथे नयन्तौ सारथेः पवयणे–प्राजनदण्डे दृष्टे उत्पथं विहाय पथ्येवावतरतः तद्वदिहापि ॥

पू० अ०—हे धर्मसारथे! तव प्रवचने दृष्टे विषमौ रागद्वेषौ दुर्दान्ततुरगाविव मन उत्पथे नयन्तौ पन्था–ज्ञानाद्यात्मको मोक्षमार्गस्तस्मादितरमार्गे नावतिष्ठेते । तन्निवृत्तौ च जीवानां सत्पथप्रस्थानं स्वतः सिद्धमेव । अत्र च धर्मस्य रथत्वमभणितमपि सारथिशब्दोपादानसामर्थ्याद् लभ्यम्, अथवोक्तिः–'निंता तुरय व्व उप्पहेणं अणं' ति यथा दुर्दान्तौ तुरगौ अनः–शकटं उत्पथे–अक्षुण्णमार्गे नयन्तौ सारथेः प्राजनदण्डे दृष्टे पथ्येवावतरतस्तद्वदिहापि ॥ २७ ॥

✽ ✽ ✽ ✽

ध० अ०—अथ कवि स्वामीना चरणकमलनूं लक्षण बोलइ । हे नाथ! भवारण्ये भीतानां देहिनां तवैव चरणौ शरणं भवतः, नान्यस्य । हे नाथ! संसाररूपीया अरण्य माही भीत–बीहता देहीया–प्राणिया नइ ताहरा जि चरणकमल शरण हुइं, नही अनेराना चरण । किंवि० भवारण्ये? प्रत्यलकषायचोरे । प्रत्यल–समर्थ कषायरूपिया चोर छइ जीणं । किं० चरणौ? सदा संनिहिता असिचक्रधनुषां रेखौ(खा ययोस्तौ) । सदा–सर्वदा संनिहित–समीपि असि–खड्ग चक्र धनुषनी रेखा छइं जेहे । जिम समर्थ चोरे अटवीमाहि हूंते हथियारना धणी शरणं कीजइ ॥ २८ ॥

ने० अ०—भगवच्चरणविधाने स्तुतिमाह—पच्च० । हे नाथ! भवारण्ये–संसारकान्तारे भीतानां देहिनां तवैव चरणौ–पादौ शरणं–शरणदौ भवतः, नान्यस्य । कीदृशे संसारे? प्रत्यलाः–समर्थाः ये कषायाः–क्रोधादयस्ते एव चौरा यस्मिन्, दुःखहेतुत्वात् । प्रत्यलचौरे आयुधवन्तः शरणं–त्राणं भवन्ति तथा भगवच्चरणावपीति भावः । [भगवत्सिद्धान्तभ्रष्टदोषकथनेन]–किंविधौ इत्याह सदा–नित्यं सन्निहिताः–समीपवर्तिनोऽसिचक्रधनूरूपा रेषा ययोः पादयोस्तथा अरण्ये–वने तथा भगवच्चरणावपीति भावः ॥ २८ ॥

श्चि० अ०—अधुना भगवच्चरणशरणविधानेन स्तुतिमाह—पयल० । हे नाथ! भवारण्ये—संसारकान्तारे भीतानां देहिनां तवैव चरणौ—पादौ शरणं—त्राणस्थानं भवतः, नान्यस्य । कीदृशे? प्रत्यलकपायचौरे । किंविधौ इत्याह—सदा—नित्यं सन्निहिताः—समीपवर्तिनोऽसिचक्रधनूरूपा रेखा ययोस्तौ तथा । यथा प्रत्यलचौरेऽरण्ये आयुधवन्तः शरणं भवन्ति, तथा भगवच्चरणावपि ॥ २८ ॥

पू० अ०—भवारण्ये भीतानां भविनां भवच्चरणौ एव शरणं भवतः । भव० किं०? प्रत्यलाः कपाया एव चौरा यत्र । चरणौ किं०? सदा सन्निहिता असिचक्रधनूरूपा रेखा ययोः (तौ) ॥ २८ ॥

ॐ ॐ ॐ ॐ

ध० अ०—अथ कवि जिननइं सिद्धान्तइं दीठा दोष कहिवा स्तुति बोलइ। हे नाथ! तव समयसरोभ्रष्टा जीवाः सकलासु रुक्षजातिषु भ्रमन्ति । हे नाथ! ताहरा समय—सिद्धांतरूपीया सरोवरनुं भ्रष्ट जीव सकल—समस्त रुक्ख जाति—नरक तिर्यंच प्रमुख हीन जातिइं फिरइं। किं० जीवाः? वध्यमानाः कर्मणा। कर्मिइं करीनइ वध्यमान—वांधीता छइ। किमिव? सारणिजलमिव—यथा सारणिजलं स्थानस्थानेषु—आलवालादिषु वध्यमानं सत् सकलासु वृक्षजातिषु भ्रमति । कुणनी परिइं? सारणि—नीकना जलनी परिइं । जिम नीकनूं जल स्थाने स्थाने—स्थानकि २ वांधीउं हूंतूं समस्त वृक्षजातिनइं विषइ फिरइ ॥ २९ ॥

मे० अ०—भगवत्सिद्धान्तभ्रष्टदोषकथनेन स्तुतिमाह—तुह० । हे नाथ! तव समयसरोभ्रष्टाः—भवत्सिद्धान्ततडागविकला जीवा भ्रमन्ति—पर्यटन्ति वृक्षजातिषु । किमिव? सारणिजलमिव—कुल्यावारीव । ८४लक्षमानस्थानेषु नारकादिभेदभिन्नेषु प्रवध्यमानाः, प्रस्तावात् कर्मभिः । यथा सरोभ्रष्टं सारणिजलं सर्ववृक्षजातिषु भ्रमति स्थानस्थानेषु आलवालेषु वध्यमानं, तथैव जीवा अपि तव आगमभ्रष्टा नरकादिषु भ्रमन्तीति भावः ॥ २९ ॥

च्चि० अ०—भगवत्सिद्धान्तभ्रष्टदोपकथनमुखेन स्तवमाह—तुह समय० । ये तु तामप्याप्तोक्तिं त्रुटिवशादासाद्य पुनर्दुष्कर्मनिर्मथिताः त्यजन्ति, तेषां तु का गतिरित्याह—जीवा रूक्षजातिषु भ्राम्यन्तीति योगः । समय एव सरः तस्माद् भ्रष्टाः—बहिर्भूता जीवाः सकलासु—चतुरशीतिलक्षप्रमाणासु जातयो—योनयः पृथ्वीकायाद्याः, रूक्षाः—कर्कशक्लेशविश्राणनपराभूता(:ता)सु रुक्षजातिषु—एकेन्द्रियादिषु भ्राम्यन्ति । किम्भूताः? स्थानेषु स्थानेषु—योनिषु योनिषु वध्यमाना—निविडकर्मभिराश्लिष्यमाणाः । यथा सारणिजलं—कुल्याजलं अगाधतटाकात् केनापि विवरेण बहिर्भूतं चम्पकादिवृक्षजातिषु स्थानेषु स्थानेषु भ्राम्यति—आलवालेषु आलवालेषु वध्यमानमेकस्मिन् पूरिते सञ्चार्यमाणमन्यत्र सञ्चार्यते ॥ २९ ॥

पू० अ०—तव समयः—सिद्धान्तः स एवोपदेशामृतपूरितत्वेन सर इव सरस्तस्माद् भ्रष्टा जीवाः रूक्षजातिषु—रूक्षयोनिषु सकलासु—चतुरशीतिलक्षमितासु भ्राम्यन्ति ठाणठाणेसु—योनिषु योनिषु वध्यमानाः,

---

१ 'पाणाने स्थान०' इति ख-पाठः ।

प्रस्तावात् कर्मभिः, सारणिजलमिव–यथा कुल्याजलं तडागादपवाहितं सकलासु वृक्षजातिषु भ्राम्यति स्थानेषु स्थानेषु आलवालेषु बध्यमानं एकस्मिन् पूरिते अन्यत्र संसरणाय ॥ २९ ॥

ॐ ॐ ॐ ॐ

ध० अ०—अथ कवि स्वामीनूं शासन आदरिइं जिस्यूं फल अनइ मूकइं जिस्यूं (दोष) तेह उपरि स्तुति बोलइ। हे नाथ! जीवाः सलिल इव तव प्रवचने गृहीते–अङ्गीकृते ऊर्ध्वं व्रजन्ति। हे नाथ! पाणीनी परिइ ताहरउं शासन आदरिइं जीव ऊर्ध्वं पहुता–देवलोक ग्रैवेयका-ऽनुत्तरादिके जाइं। तु–पुनः शासने आदृत्य मुक्ते सति अधो–नरकादिषु व्रजन्ति। शासन आदरी मूकिइ हूंतइं अधो–नरकादिके जाइं। किं० जीवाः? कूपारघट्टघटीसंनिभाः। कूआ–अरघट्ट घडिनी दृष्टांत सरीषा छइ; कूइ जे घडी पाणी भरी ते उपहरी[1] जाइं; जे पाणी भरी नइं मूंकइ ते नीची जाइं ॥ ३० ॥

ने० अ०—भगवत्प्रवचनगृहीतमुक्तगुण (दोष) कथनमुखेन स्तुतिमाह—सलि०। हे नाथ! सलिल इव प्रवचने तव सत्के आचारादिभेदभिन्ने त्वदाज्ञारूपे गृहीते–कक्षीकृते ऊर्ध्वं–स्वर्गादौ गच्छन्ति, विमुक्ते तु अधोभागे–नरकादौ व्रजन्ति जीवाः। किंविधाः? कूपारघट्टघटीसन्निभाः। यथा कूपारघट्टघटा(ट्यः) जलं गृह्णन्ति तदा ऊर्ध्वं व्रजन्ति ये (याः) च न गृह्णन्ति ते (ताः) अधो यान्ति, तथा जीवा अपीति भावः ॥ ३० ॥

चि० अ०—अथान्वयव्यतिरेकाभ्यां जिनप्रवचनाङ्गीकारपरिहारयोः फलमाह–सलिल व०। तव प्रवचने सलिल इव गृहीते–अङ्गीकृते ज्ञान-श्रद्धा-ऽनुष्ठानैः सम्यगासेविते सति जीवा ऊर्ध्वं–स्वर्गादौ गच्छन्ति, विमुक्ते त्वधः–'सीमन्ता'दौ व्रजन्ति। किम्भूता जीवाः? कूपारघट्टघटीतुल्याः–कूपारघट्टघट्यः; या जलं गृह्णन्ति ता ऊर्ध्वं व्रजन्ति याश्च मुञ्चन्ति ता अधो व्रजन्ति, तथा जीवा अपि ॥ ३० ॥

पू० अ०—तव प्रवचने गृहीते–सेविते ऊर्ध्वं–स्वर्गादिषु यान्ति। तस्मिन्नेव वैपरीत्येन विमुक्ते अधो–नरकादिषु व्रजन्ति। उपमामाह–कूपारघट्टघटीमालातुल्याः, सलिले गृहीते विमुक्ते च यथा ताः सलिले गृहीते कूपस्योपरितनं प्रदेशं यन्त्रप्रयोगात् प्राप्नुवन्ति, त्यक्ते च जले अधः कूपस्यैव व्रजन्ति ॥ ३० ॥

ॐ ॐ ॐ ॐ

ध० अ०—अथ जिनोक्तक्रियादुष्करपणूं कहिवइ करी स्तुति बोलइ। हे नाथ! यथा अन्ये तीर्थिनो हरि-हरादयो लीलया मुक्तिं नयन्ति–प्रापयन्ति, तथा त्वं न प्रापयसि। हे स्वामी! जिम अन्य तीर्थी हरि-हरादिक लीलाइं मुक्ति दिइं तिम तूं न दिअं, क्रियानुष्ठान तणी कष्टसाध्यपणा तउ। तथापि तव मार्गलग्नाः बुधाः शिवसौख्यानि मृगयन्ते। तथापि ताहरइ मार्गि लागा बुध–विद्वांस क्रियाकलाप तपोऽनुष्ठानि करि दोहिलाइ शिव–मोक्ष तणां सुख पामइं ॥ ३१ ॥

---

१ 'उपहरा' इति ख-पाठः। २ 'अरहंट' इति ख-पाठः।

ने० अ०—अधुना भगवदुक्तक्रियादुष्करताकथनेन स्तुतिमाह—ली० । हे नाथ! यथा अन्यदेवा–हरि-हरादयस्तीर्थिका लीलया नयन्ति मोक्षं, तथा न त्वम्; कष्टसाध्यत्वात् क्रिया-ऽनुष्ठानस्य । यद्यप्येवं तथापि तव मार्गलग्नाः–तव मार्गस्थिता मृगयन्ते–निन(भा?)लयन्ति बुधाः–अवगततत्त्वाः । निन्दाद्वारेण स्तुतिरियम् ॥ ३१ ॥

चि० अ०—अथ जिनप्रवचनस्यैव विदुषां विशेषोपादेयत्वमाह–लीलाइ० । हे नाथ! यथा अनायासेन अन्ये–हरि-हरादिसम्बन्धिनस्तीर्थिकाः मोक्षं नयन्ति, तथा न त्वम्; कष्टसाध्यत्वात् तव क्रियानुष्ठानस्य । तथाप्येवं सत्यपि तव ज्ञानादिरूपो मोक्षमार्गस्तत्र लग्नाः–तत्र स्थिताः शिवशर्माणि मृगयन्ते बुधाः ॥ ३१ ॥

पू० अ०—यथाऽन्ये सौगतादयस्तीर्थिका लीलया "मृद्वी शय्या प्रातरुत्थाय पेया" इत्याद्यनुष्ठानेन मोक्षं प्रापयन्ति, तथा न त्वम् । तथापि तव मार्गो ज्ञानादिस्तत्र लग्ना विबुधाः शिवसुखानि मृगयन्ते ॥ ३१ ॥

❀ ❀ ❀ ❀

ध० अ०—अथ कवि जिनदर्शनमाहात्म्य तणी स्तुति बोलइ । हे जिन! त्वयि दृष्टे जीवाः संसारफलके बन्धवधमरणभाजो न भवन्ति । किंवि० जीवाः? अक्षैः–इन्द्रियैर्ह्रियमाणाः । अक्ष–इंद्रिए हरीता छइं । का इव? सारा इव । यथा साराः अक्षैः–पाशकैः फलके ह्रियमाणाः । पगडे दृष्टे सति बन्ध-वध-मरणभाजो न भवन्ति । जिम सारडां अक्ष-पासे फलक-पाटीइ हरीतां पगडइं दीठइं हूंतइ बंधवधमरणभाजिया न हुइं तिम हे स्वामी! जीवरूपीयां सारडां संसाररूपीया फलक-पाटीयां माहि इंद्रियरूपीए पासे हरीता हूंता ताहरा शासनरूपीइं पगडइं दीठइं बंधवधमरणभाजीयां न हुइं ॥३२॥

ने० अ०—साम्प्रतं भगवद्दर्शनमाहात्म्यद्वारेण स्तुतिमाह—सा० । हे जिन! त्वयि दृष्टे जीवाः संसारफलके बन्ध-वध-मरणभाजो न भवन्तीति योगः । अक्षैः–इन्द्रियैः ह्रियमाणा अपि । का इव? सारा इव । कोऽर्थः? यथा साराः अक्षैः–पाशैः फलके प्रतीते ह्रियमाणा बन्ध-वध-मरणभाजो भवन्ति तन्न, तथा जीवास्त्वयि दृष्टे इति भावः ॥ ३२ ॥

चि० अ०—साम्प्रतं भगवद्दर्शने माहात्म्यद्वारेण स्तुतिमाह—सारि ध० । हे जिन! त्वयि दृष्टेऽमी जीवा बन्ध-वध-मरणभागिनो न भवन्ति । किम्भूताः? अक्षैः–इन्द्रियैः, अपिशब्दस्य भिन्नक्रमत्वाद् ह्रियमाणा अपि । क? संसार एव चतुरन्तत्वात् फलकं तस्मिन् । का इव? शारय इव । इयं च वैधर्म्योपमा । यथा शारयः काष्ठादिमय्योऽक्षैः–पाशकैः फलके ह्रियमाणा–इतस्ततः सञ्चार्यमाणाः । कैतवप्रसिद्धानि प्राप्नुवन्ति ॥ ३२ ॥

पू० अ०—संसार एव चतुरन्तत्वात् फलकस्तत्र त्वयि देवतत्त्वबुद्ध्या दृष्टे जीवा बन्धादिभागिनो न भवन्ति । अपिशब्दस्य भिन्नक्रमत्वादक्षैः–इन्द्रियैर्ह्रियमाणाः–सञ्चार्यमाणाः सारयो यथा बन्ध-वध-मरणानि प्रतीतानि न भजन्ते पदे दृष्टे ॥ ३२ ॥

❀ ❀ ❀ ❀

---

१ प्रेक्ष्यतां ९५तमं पृष्ठम् ।

ध० अ०—अथ कवि जिननइं अवहेलिइं जीव दुक्ख देषइं ते वात बोलइं। हे स्वामिन् ! त्वया अवहेलिता–अवज्ञाताः सत्त्वा निगोदैकशृङ्खलाबद्धाः सन्तः अनन्तं कालं नयन्ति–गमयन्ति। हे स्वामी ! तइं अवहेल्या–अवगण्या सत्त्व–प्राणीया निगोदनी एक सांकलं बांध्या हूंता अनंत काल नीगमइं। किंविशिष्टाः सत्त्वाः ? समं कृताहारनीहाराः समकाल कृत–कीधउ[1] आहार अनइ नीहार छइ ॥ ३३ ॥

ने० अ०—भगवदग्रे दुःखकथनद्वारेण स्तुतिमाह–अ०। हे प्रभो !–स्वामिन् ! त्वया अवधीरिता–अवज्ञाता अवगणिताः सत्त्वाः–प्राणिनः नयन्ति–गमयन्ति कालं अनन्तम्। किंविधाः सन्तः ? निगोदैकशृङ्खलाबद्धाः–क्रोडीकृताः। यद्वा पुनः कीदृशाः ? समम्–एककालं कृतावाहार-नीहारौ यैस्ते। अनन्तकालं–अनन्तानन्तपुद्गलपरावर्तान् नयन्ति–गमयन्ति ॥

ननु भगवतः किं समस्तावज्ञाकारणं सत्त्वेषु येनेदमुच्यते ? नैवम्। परं ये कलुषितगात्राः भगवन्तं नावलोकयन्ति ते भगवता अवधीरिता भण्यन्ते। येऽन्येऽपि नियोगिप्रमुखाः राज्ञाऽपराधेऽवही(धी)रिताः निगोदप्रायेषु गुप्तिगृहेषु शृङ्खलाबद्धा एव स्युः ॥ ३३ ॥

चि० अ०—अवही०। हे प्रभो ! त्वयाऽवधीरिताः–अवगणिताः सत्त्वाः अनन्तकालं–अनन्तान् पुद्गलपरावर्तान् नयन्ति। निगोदरूपा या संलग्ना एका शृङ्खला तया निबद्धाः। पुनः किम्भूताः ? समम्–एककालमेव कृतौ आहारनीहारौ यैस्तथा। यथा नियोगिनः प्रभुणाऽवगणिता गुप्तगृहेषु निपतिताः शृङ्खलानिगडिताः सार्धकृताहारनीहाराः प्रभूतं कालं गमयन्ति ॥ ३३ ॥

पू० अ०—त्वया अवगणिताः सत्त्वाः अनन्तकालं प्रस्तावान्निगोदेषु नयन्ति। अवधीरणा च सामग्री-वैकल्येनैव धर्मोपदेशाद्यभावात्। निगोदरूपा एवैका संलग्ना शृङ्खला तया नियन्त्रिताः। तथास्थितैरेव तद्भवयोग्याहारैः सर्वे युगपदाहारं कुर्वन्ति तत्परिणामे च नीहारमपि, उच्छ्वासनिश्वासयोरुपलक्षणं चैतत्। अन्येऽपि ये नियोगिप्रमुखाः प्रभुणा अवगणिताः स्युस्तेऽपि निगोदप्रायेषु गुप्तिगृहेषु अयःशृङ्खलाबद्धा युगपत्कृताहार-नीहाराश्च भूरिकालं गमयन्तीत्युक्तिलेशः ॥ ३३ ॥

* * * *

ध० अ०—अथ कवि दुःख आविइ जिननूं दर्शन शुभकारीउं बोलइ। हे तपोनिधे ! यैर्दुःखैस्तप्तानां देहिनां त्वयि विषये प्रतिपत्तिर्जायते। हे नाथ ! जेहे दुःखि करी तप्त-तापाव्या देहीया–प्राणीया रहइं ताहरइ विषइ प्रतिपत्ति हुइ। तानि दुःखानि अहं अधर्मकर्मणः फलानि न मन्ये, किन्तु धर्मकर्मण एव फलानि मन्ये। ते दुःख हूं अधर्म-कर्म–पापनां फल न मानउं, किंतु धर्मकर्म इजिनां(?) फल मानउं ॥ ३४ ॥

ने० अ०—सम्प्रति दुःखान्यपि शुभकारणानि भगवद्दर्शने इत्याह—जेहिं०। हे तपोनिधे ! यैर्दुःखैस्तप्तानां देहिनां परमा–प्रधाना प्रतिपत्तिः–शुभवासना त्वयि, तानि दुःखानि अहमेव शङ्के न भवन्त्येव। किं तत् ? कर्मफलम्। अधर्मफलमेवेति भावः ॥ ३४ ॥

[1] 'कीधूं' इति क-पाठः।

चि० अ०—साम्प्रतं दुःखान्यपि सुखकारणानि भवन्तीति दर्शयन्नाह—जेहिं तवि०। हे तपोनिधे! यैर्दुःखैस्तापितानां–कदर्थितानां त्वयि विपये प्रकृष्टा प्रतिपत्तिः–शुभवासनाऽजायत, अहं मन्ये तानि दुःखानि अधर्मस्य कर्म–कृतिर्न भवेयुः। यदि पापमूलान्येव स्युस्तदाऽनुरूपां–पापानुसम्बन्धिनीमेव धियमुत्पादयेयुः, किन्तु धर्मफलमेवेति ॥ ३४ ॥

पू० अ०—यैर्दुःखैस्तापितानां–कदर्थितानां त्वयि प्रकृष्टा प्रतिपत्तिः–प्रीतिर्जायते, तानि दुःखानि पापसत्कानि न भवन्ति। पुराकृतदुष्कृतवशात् जीवा दुरवस्थां प्राप्नुवन्ति। तत्र च येषां सर्वज्ञे रुचिर्जायते तेषां कथं दुःखान्यधर्मकर्तृकाणि? (अपि तु नाधर्मकर्तृकाणि) प्रत्युत स्पृहणीयानीत्यर्थः ॥ ३४ ॥

卐 卐 卐 卐

ध० अ०—अथ कवि जिनसेवानूं फल बोलइ। हे नाथ! मम तवैव सेवया ध्रुवं–निश्चितं मोहोच्छेदो भविष्यति, तेन कारणेनाहं नन्दामि–हर्षमनुभवामि। हे नाथ! मुझ रहइं ताहरी सेवा ध्रुव–निश्चिइं मोहोच्छेदु केवलज्ञानप्राप्ति हुसिइं तीणं[1] कारणि नंदउं–हर्ष अनुभवउं। यत् पुनस्तत्र मोहोच्छेदेन केवलज्ञाने उत्पन्ने सति त्वं न वन्दनीयः, तेन झिज्झामि–हीनो भवामि। पणि जि तीणइं मोहोच्छेदि केवल उपन्नइ हूंतइ मइं तूं न वांदिवउ तीणइं कारणि करी झिज्झउं–हीणउ हउं, एतलइं केवलज्ञानी आपण २ माहि नमइं नहिं ॥३५॥

ने० अ०—भगवत्सेवाफलमाह—होही०। हे स्वामिन्! भविष्यति–सम्पत्स्यते मोहच्छेदो[4]–मोहविनाशः भ[ग]वतः सेवया–पर्युपासनया ध्रुवो–निश्चित इति नन्दामि–हर्षमनुभवामि। यत् पुनर्न वन्दितव्यो–न वन्दनीयः तत्र मोहोच्छेदे तेन कारणेन झिज्झामि–खेदं गच्छामि। किमुक्तं भवति? कविर्धनपालः आत्मन्येव भक्त्यतिशयमाचष्ट इति गुरूपदेशः ॥ ३५ ॥

चि० अ०—भगवत्सेवाफलमाह—होही०। हे स्वामिन्! भविष्यति–सम्पत्स्यते। किम्? मोहच्छेदो[5]–मोहविनाशो भवतः पर्युपासनया ध्रुवो–निश्चित इति नन्दामि–हर्षमनुभवामि, यत्पुनस्तत्र मोहच्छेदे[6] सञ्जाते त्वं न वन्दनीयो–न वन्दितव्यः तेन झिज्झामि–क्षीणीभवामि ॥ ३५ ॥

पू० अ०—तत्र सेवया मोहस्योच्छेदो भविष्यतीति हेतोर्हर्षं वहामि, यत् पुनस्तत्र मोहोच्छेदे त्वं न वन्दनीयस्तेन क्षीणो भवामि। त्वया मोहोच्छेदेन मां स्वपदवीमारोपयिष्यता करिष्यते सुस्वामिधर्मः, मम तु प्रणाममात्रेणापि रहितस्य कृतघ्नत्वं, तथा स्थितिरेव च केवली केवलिनं न नम(तीं)ति ॥ ३५ ॥

卐 卐 卐 卐

ध० अ०—अथ कवि जिननां सेवारहित संपद दुःख मानतउ बोलइ। हे नाथ! तव सेवाविमुखस्य मम याः समृद्धयो भवन्ति ता मा भवन्तु। हे नाथ! ताहरी सेवाविमुख हूंता मुझ रहइं समृद्धि–लक्ष्मी हुइ ते मु हु। का इव? अधिकारसम्पद इव। यथा अधिकारसम्पदः पूर्वं सुखदाः पर्यन्ते विडम्बनफला एव भवन्ति। कुणनी परिइं? अधिकारीयानी

१ 'तव' इति ख-पाठः। २ 'तीणि' इति ख-पाठः। ३ 'तउं' इति ख-पाठः। ४–६ 'मोह'स्थाने 'मोहो' इति प्रतिभाति।

संपदनी परिइं । जिम अधिकारीया व्यापारीयानी संपद पहिलउं सुखदायिनी पर्यंति–छेहडइ विडंवनफलजि हुई ॥ ३६ ॥

ने० अ०—भगवत्सेवाविमुखसम्पदां दुःखहेतुत्वमाह—जा० । हे भगवन् ! या भगवत्सेवाविमुखस्य–तव पर्युपासनापराङ्मुखस्य भवन्तु सम्पदः ता मम समृद्धयः–सम्पदः मा भवन्तु । यतोऽधिकारसम्पद इव–नियोगलक्ष्म्या इव पर्यन्ते विडम्बनफलं यासां ताः तथा अपमानदुःखदाः ॥३६॥

चि० अ०—अथ जिनानुरागेण सम्पदोऽप्यवगणयन्नाह—जा तुह० । यास्तव विमुखस्य गुणस्थानिन इति भावः मम समृद्धयो भवन्ति ता मम मा भूवन् । विशेषणद्वारेण हेतुमाह–किम्भूताः ? पर्यन्ते विडम्बनैव फलं यासां ताः । उपमामाह–अधिकारो–राजनियोगस्तस्य सम्पदस्ता इव ॥ ३६ ॥

पू० अ०—याः त्वत्सेवाविमुखस्य मिथ्यादृष्टेः समृद्धयस्ताः समृद्धयो मा भूवन् मम । यतः पर्यन्ते विडम्बनैव फलं यासां व्यसनासेवनात् दुर्गतिपातहेतुत्वेन । का इव ? अधिकारो–राजनियोगस्ततो याः सम्पदस्ता इव । ता अप्यन्ते राजकोपादिना विडम्बनफलाः स्युः ॥ ३६ ॥

* * * *

ध० अ०—अथ कवि जिननइं अपूर्व प्रदीपपणउं प्ररूपतउ बोलइं । हे नाथ ! दीपः पूर्वं तमः–अन्धकारं भित्त्वा जनस्य पदार्थान् घटादीन् प्रकटयति । हे नाथ ! दीवउ पहिलउं तम–अन्धकार भेदी जन–लोक रहइं पदार्थ–घटादिक प्रकासइ । जगदेकदीपस्य तव पुनः विपरीतमिदं निवर्तितं–सञ्जातम् । पूर्वं पदार्थान् प्रकाश्य पश्चात् तमो भिनत्सि । जग रहइं प्रदीप समान तुझ रइं ए उं विपरीत हूओ जेह कारण तउं पहिलउ उपदेशि पछइ तम–पाप भेदइ ॥ ३७ ॥

ने० अ०—इदानीं भगवतः प्रदीपत्वख्यापनमुखेन स्तुतिमाह—भित्तू० । हे देव !–स्वामिन् ! दीपः–प्रदीपः तमः–अन्धकारं भित्त्वा–तिरस्कृत्य पदार्थान्–घटपटादीन् जनस्य–लोकस्य प्रकटयति । तव पुनर्वैपरीत्यमिदं पूर्वोक्तं निर्वर्तितं–सञ्जातं यस्मात् प्रथमं पदार्थान् प्रकाश्य पश्चात् तमो भिनत्सि । किंविधस्य ? जं ( यत् ) तव जगदेकदीपस्य–भुवनाद्वितीयदीपस्य ॥ ३७ ॥

चि० अ०— प्रभोरद्भुतचरित्रमाह—भित्तूण तुमं० । हे देव ! दीपः–प्रदीपस्तमो भित्त्वा–तिरस्कृत्य जनस्य यद्यर्थिनः पदार्थान् प्रकटयति, तव पुनर्जगदेकदीपस्य पदं विपरीतं व्यूढम् । अयमाशयः–दीपो हि तमो भित्त्वा वस्तूनि व्यञ्जयति, त्वं तु पूर्वं स्वोपदेशेन भव्यजन्तुजातस्य ···दं··· जीवादिपदार्थान् प्रकटयसि, ततस्तस्य तमः–अज्ञानं भिनत्सि । अहो तव सर्वातिशायि चरित्रम् ॥ ३७ ॥

पू० अ०—अन्यो दीपस्तमः–अन्धकारं भित्त्वा घटादीन् पदार्थान् प्रकटयति, तव पुनः केवलालोकप्रकाशकत्वेन जगदेकदीपस्य इदं दीपकार्यं विपरीतं निष्पतितं–निर्व्यूढम् । त्वं तु पूर्वं स्वोपदेशांशुभिर्भव्यानां जीवादिपदार्थान् प्रकटयसि–अवबोधयसि ततस्तत्त्वावबोधोत्पादनेनैव तमः–अज्ञानं भिनत्सि ॥ ३७ ॥

* * * *

१ 'पणूं प्ररुपतु' इति ख-पाठः ।

ध० अ०—अथ कवि जिनवचनरूप मन्त्रनूं प्रमाण बोलइ। हे नाथ! यदि तव वचन-मन्त्रस्य कीर्तनमपि कर्णे क्रामति-प्रविशति, तदा मिथ्यात्वविषप्रसक्ता जीवाः सचेतनाः किं न भवन्ति ?। हे नाथ! जेइ ताहरा वचनमन्त्र तणउं कीर्तनइ कर्णि-कानि पइसइ तु मिथ्यात्वविषइ प्रसक्त जीव सचेतन किस्यूं न हुइं? अपि तु हुइं जि। जिम विषव्याप्त कोएक जीव भलइं सप्रत्यय मन्त्रि निर्विष हुइ, तिम मिथ्यात्व व्यापइ जीव जिननइ वचनि मिथ्यात्व रहित हुइ ॥ ३८ ॥

ने० अ०—भगवद्वचो मन्त्रशक्तिविधानेन स्तुतिमाह—( मिच्छ० )। हे जिन! स्वामिन्! यदि त्वद्वचनमन्त्रस्य कियदपि-स्तोकमपि पदमात्रमपि कर्णे क्रामति-प्रविशति, तदा ते जना मिथ्यात्वविषप्रसुप्ता विगलितसंविदः सचेतनाः-चैतन्ययुक्ताः किं हेयोपादेयबुद्धयो न स्युः? अपि तु भवन्त्येव, चिलातीपुत्रादिवत्। यथा कश्चिज्जीवो विषेण व्याप्तो-विषमूर्च्छितस्तत्कर्णे गारुडमन्त्रस्य जापेन सचेतनो भवति, तथा मिथ्यात्वविषग्रस्तो जीवो भगवद्वचनेन मिथ्यात्व-विषरहितो भवति ॥ ३८ ॥

चि० अ०—जिनवचनस्यैवातिशयमाह—मिच्छत्त०। हे जिन! जीवा मिथ्यात्वविषप्र-सुप्ता-विपरीतार्थश्रद्धानगराघ्राताः सचेतनाः समस्तहेयोपादेयादिविचारचतुराः किं न भवन्ति? भवन्त्येव; यदि कर्णयोः कियन्मात्रमपि-पदमात्रमपि क्रामति-प्रविशति। कस्य? तव वचनं-द्वादशाङ्गं प्रवचनं तदेव रागादिविषदलनकलितत्वेन मन्त्र इव मन्त्रस्तस्य ॥ ३८ ॥

पू० अ०—मिथ्यात्वमेव विषं तेन प्रसुप्ता-विगलितसंविदो जनाः किं सचेतना न स्युः? स्युरेव। चिलातीपुत्रादिवद्, यदि तेषां कर्णे त्वत्सिद्धान्तमन्त्रस्य कियन्मात्रं-पदमात्रमपि प्रविशति। अन्येऽपि ये विषमूर्च्छितास्तत्कर्णे गारुडमन्त्राक्षरद्वयत्रयपतने सचेतनाः स्युरेव ॥ ३८ ॥

※ ※ ※ ※

ध० अ०—अथ कवि जिननइं आगमि रह्या दृढपणा ऊपरि वात बोलइ। हे नाथ! ये परसमया आकर्णिता क्षणार्धमपि त्वयि स्थिरं-निश्चलं कुर्वन्ति। हे स्वामी! जे परसमय-अन्य मतीना आगम आकर्ण्या-सांभळ्या हूंता क्षण एक मन ताहरइ विषइ स्थिर-निश्चल करइं। तथापि त्वत्समयज्ञानां ते परसमया मनो न हरन्ति। तथापि ताहरा आगमना जाण तीहना मन ते पर समइ आह्लाद न जि पामइं ॥ ३९ ॥

ने० अ०—आय०। ये परसमयाः-कुतीर्थिकागमा बौद्धादिसिद्धान्ताः आकर्णिताः-श्रुताः क्षणार्धमपि-स्तोककालमपि त्वयि स्थिरं अनुरागं-बहुमानं कुर्वन्ति-निष्पादयन्ति, तथापि ते समयाः मनः-चित्तं न हरन्ति-नाह्लादयन्ति। केषाम्? त्वत्समयज्ञानां-भवत्सिद्धान्तवेदिनां, निश्चलचित्तानां त्वयीति भावः ॥ ३९ ॥

चि० अ०—जिनसमयस्यैव परसमयेभ्यो भङ्ग्यन्तरेण गौरवमाह—आयण्णिआ०। परे-कपि-लादयः तेषां समयाः-सिद्धान्ताः क्षणार्धमपि-स्तोककालमपि आकर्णिताः-श्रुतिपथमवतारिताः

पई–त्वयि विषये स्थिरमनुरागम्–अन्तःप्रीतिं कुर्वन्ति, तथापि एवं सत्यपि त्वत्समयज्ञानां पुंसां मनो न हरन्ति–न प्रीणयन्ति, नावर्जयन्तीति। अयमाशयः—ते हि परसमया यदि क्षोदक्षमाः स्युः, तदा श्रोतुश्चेतांसि अनुरञ्जयन्तीति, न च तथाविधाः श्रूयमाणास्त्वनुरागं जनयन्ति ॥ ३९ ॥

पू० अ०—ये परसमयाः–कुतीर्थिकागमाः क्षणार्धमप्याकर्णितास्त्वयि स्थिरमनुरागं कुर्वन्ति। तथापि ते तव समयज्ञानां मनो न हरन्ति, परस्परासम्बद्धत्वेन फल्गुत्वात्, यथा यथा श्रूयन्ते तथा तथा यथार्थाभिधायिनि त्वयि प्रीतिं जनयन्ति इति स्थाने ॥ ३९ ॥

※ ※ ※ ※

ध० अ०—अथ कवि जिनना नयनु प्रभावु बोलइ। हे नाथ! तव नयाः वादिभिः परिगृहीताः अन्योन्यसंलग्नाः क्षणेन प्रतिपक्षं विमुखं कुर्वन्ति। हे स्वामी! ताहरा नैगम १ संग्रह २ व्यवहार ३ ऋजुसूत्र ४ शब्द ५ समभिरूढ ६ एवंभूत ७ रूप ए सात नय वादी–वचनकुशलीए परिगृहीत–परिवरिया अन्योन्यइं संलग्न–मिल्या हूंता क्षण एक माहि प्रतिपक्ष–अन्य वादी विमुख–ऊपराठउ करइं। के इव? महागजा इव। यथा महागजा वाजिभिः–तुरङ्गैः परिवृताः सन्तोऽन्योन्यसंलग्ना भवन्ति। कुणनी पंरिइं? महागजेंद्रनीं परिइं, जिम महागजेन्द्र वाजी–घोडे परिवर्या हूंता अन्योन्यइं–परस्परइं संलग्न–मिल्या अन्य मती एकेकु नय जि एकांत मानइ जैन सातइ नय अनेकांति–स्याद्वादिइं मानइं ॥ ४० ॥

ने० अ०—इदानीं नयप्रभावं प्रतिपादयन् स्तुतिमाह—वाई०। हे नाथ! तव नयाः–नैगमादयः क्षणेन–स्तोककालेन प्रतिपक्षं विमुखं–पराङ्मुखं कुर्वन्ति। के इव? महागजा इव–प्रधानद्विपा इव। किंविधा नयाः–किंविधा गजा इति विश्लेषमाह–वादिभिः–वचनकुशलैः परिगृहीताः–परिवारिताः अङ्गीकृताः। महागजास्तु वाजिभिः–तुरङ्गैः। तथा अन्योन्यं–परस्परं संलग्नाः–मिलिताः मिथः सापेक्षास्तेन एककार्यकरणप्रवीणाः। एकाकिनो नयास्तु निरपेक्षत्वाद् दुर्नया एव स्युः। यतः कैश्चिदयःशलाकाकल्पा नया अभ्युपगमिता–आश्रिताः। जैनैस्तु सर्वनयसमूहमयं जिनमतं प्रतिपन्नम्। के इव? महागजा इव। किंविधाः? वाजिभिः कृतपरिक्षेपाः ॥ ४० ॥

चि० अ०—वाईहिं०। हे नाथ! तव नया–नैगमादयो वादिभिः परिगृहीताः स्वपक्षव्यवस्थापनेन परापक्षाव'''प्रयुक्ताः प्रतिपक्षं–कुतीर्थिसार्थसार्थं विमुखा विगलितप्रतिभत्वेन वादकथापराङ्मुखं क्षणेन–स्तोककालमभूताः कुर्वन्ति। किम्भूताः? अन्योन्यसंलग्नाः–परस्परसापेक्षत्वेनैककार्यकारणप्रवणाः। एकाकिनस्तु अवधारणप्रवणा दुर्नया एव। उपमामाह—के इव? महागजा इव। यथा महागजा–भद्रजातीयदन्तिनो विपक्षाणां अनीकं हेलयैव प्रवृत्ताः पश्चान्मुखं क्षिपन्ति। कीदृशाः? वाजिभिः–अश्वैः परिगृहीता इत्यर्थः ॥ ४० ॥

पू० अ०—तव नैगमादिनयाः'''वादिभिः स्वपक्षव्यवस्थापनेन परपक्षविक्षेपाय प्रयुक्ताः क्षणाद् विपक्षं विमुखं कुर्वन्ति। वाजिभिः कृतपरिक्षेपाः ॥ ४० ॥

※ ※ ※ ※

१ 'परिं' इति क–पाठः।

ध० अ०—अथ कवि स्वामीना सिद्धान्तनूं विंदुरपणउं बोलइ। हे नाथ! यैर्वचनैरसमञ्जसा अपि परसमयाः कीर्तिमाप्नुवन्ति। हे स्वामी! जेहे वचने असमञ्जस–असंबद्धइ पर समय कीर्ति पामइ। तत् (तानि?) त्वत्समयमहोदधेर्मन्दा विन्दुनिस्यन्दाः–विन्दुलवा वर्तन्ते। ते ताहरा समय–सिद्धान्त समुद्र आगलि मन्दा विन्दुलवा वर्तइं॥ ४१॥

ने० अ०—भगवत्सिद्धान्तोदधेः परसमयानां बिन्दुत्वमाह—पावं०। यैः कैश्चन वचनैः–वचोभिर्ग्रहचारचन्द्रादित्योपरागादिज्ञानरूपैर्यशः–कीर्तिं प्राप्नुवन्ति परसमयाः असमञ्जसा अपि–अघटमाना अपि, तेऽपि (तान्यपि?) त्वत्समयमहोदधेर्मन्दा–अप्रकृष्टा अपि विन्दुनिस्यन्दा–विन्दुलवाः। जिनमतव्यतिरेकेणान्यद् नास्ति किञ्चिज्ज्ञानमिति भावः॥ ४१॥

चि० अ०—पावंति०। परसमया असमञ्जसा अपि–विसंस्थुलत्वेन अघटमाना अपि यैर्वचनैर्ग्रहचारचन्द्रोपरागादिपरिज्ञानरूपैर्जने यशः–श्लाघारूपं प्राप्नुवन्ति, तानि वचनानि तव समयमहोदधेर्मन्दा–अल्पविषयत्वेन अल्पप्रकाशका विन्दुनिस्यन्दा–विन्दुलवाः शीकरा इत्यर्थः। अत्र प्राकृतत्वात् नपुंसकस्यापि पुंलिङ्गनिर्देशः। इदमत्र हृदयम्–जिनमतव्यतिरेकेण किञ्चिन्न ज्ञानमस्तीति॥ ४१॥

पू० अ०—विसंस्थुला अपि परसिद्धान्ता यैर्वचनैश्चन्द्रसूर्योपरागादिरूपैः श्लाघां लभन्ते, तानि च वचनानि मन्दानि–अल्पविषयत्वेन स्तोकप्रकाशकानि, अतः श्रुतमहोदधेर्ज्ञानजलविप्रुषां शीकराणीव। अयमाशयः–श्रुतकेवलिनो असङ्ख्येयभवान् जीवानां प्रतिपादयन्ति त्वत्समयपारगाः। ततपुरो ग्रहोपरागादिज्ञानप्रकाशकं यत्किञ्चिदेतत्॥ ४१॥

* * * *

ध० अ०—अथ कवि प्रवहणनइ दृष्टान्त(इं) सर्वज्ञइं मूक्या जीवनइं विडंबना हेतुफल बोलइ। हे नाथ! त्वयि मुक्तैः सति जीवैः पोत इव संसारसमुद्रे विविधा विडम्बनाः प्राप्ताः। हे नाथ! तइं मूक्यइं हूइं तइं जीवे पोत–प्रवहणनी परिइं संसाररूपीया समुद्र माहि विविध–नाना प्रकार दारिद्र्यदोहलिदुःखच्छेदनभेदनवेदनादि दुःख[1] पाम्या। किंवि० जीवैः? अनुवेलं आपगामुखपतितैः। वेल वेल पूठि आपदरूपिणी आपगा–नदी मुखि पड्या छइं। जिन प्रवहण मूंकिइं[2] संसारिसमुद्रि विडंबना जि पामीइ॥ ४२॥

ने० अ०—साम्प्रतं दृष्टान्तेन भगवति मुक्ते विडम्बनाद्वारेण स्तुतिमाह–पइं०। हे नाथ! त्वयि मुक्ते पोत इव जीवैर्भवार्णवे प्राप्ताः–लब्धा विडम्बनाः–कदर्थना विविधा–दारिद्र्यादिप्रकाराः। किम्भूतैः? आपन्मुखपतितैः। कथम्? अनुवेलम्, एकत्र वेलं–कल्लोलमाश्रित्य अन्यत्र वारंवारम्। यथा कश्चित् पुरुषः पोते मुक्ते आपगा(मुखे)–नदीमुखे पतितः अनुवेलं विडम्बनां प्राप्नोति, तथा जीवैरपि संसारे त्वयि मुक्ते प्राप्ता इति गर्भः॥ ४२॥

चि० अ०—अथ त्वां प्राप्यापि दुष्कर्मवशगास्त्यजन्ति तेषां गतिमाह—पइं मुक्के०। जीवैर्वि-

---

१ 'दुक्ख' इति ख-पाठः। २ 'मूकियइं' इति ख-पाठः।

डम्बना विविधा–गतिचतुष्कजाः प्राप्ताः, अनुवेलं–प्रतिक्षणं आपन्मुखपतितैः त्वयि मुक्ते सति। क इव ? पोत इव। यथा केचन आत्मवैरिणोऽम्बुमध्ये पोतं त्यजन्ति, त्यक्ते च तैरापगामुखपतितै-र्विविधा विडम्बना–मज्जनोन्मज्जनक्रूरमकरादिदंष्ट्रादारणादिकाः प्राप्यन्ते, तथा तैर्जीवैरपि ॥४२॥

पू० अ०—आपदो–जल-ज्वलनाद्यास्तन्मुखपतितैर्जीवैर्भवार्णवे त्वयि मुक्ते सति प्रतिक्षणं अनेका विडम्बनाः प्राप्ताः, यथा पोते मुक्ते आपगामुखपतितैर्मज्जनोन्मज्जनादिविडम्बनाः प्राप्यन्ते ॥ ४२ ॥

※ ※ ※ ※

ध० अ०—अथ कवि तेह जिवि विडंवना चातुर्गतिक संसारि जिम अनुभवी तिम चिहु गाथाए बोलई। हे नाथ! मयाऽप्रतिष्ठाने–सप्तमनरकपृथिव्यां मध्यवर्तिनि नरकवासे पट्षष्टिसागरोपमाणि निरन्तरं उषितम्। हे नाथ! मइं अपइट्ठाणइ–सातमी नरक पृथ्वी माहिं वर्तइ नरकावासइ छासट्ठि सागरोपम प्रमाण काल निरन्तर वसिउं। किंवि० मया? अप्रार्थितागतमत्स्यभवस्तत्रान्तर्मुहूर्तं किञ्चिन्न्यूनं घटिकाद्वयं उषितेन। अप्रार्थिइं आवु मच्छयभव तिहां अन्तर्मुहूर्त–कांइ थोडइं स्यू ऊणूं वि घडी प्रमाण वस्युं छइ ॥ ४३ ॥

ने० अ०—साम्प्रतं विडम्बना चतुर्गतिसंसारे यथाऽनुभूता तथा गाथाचतुष्केण दर्शयन्नाह–वुच्छं०। हे देव! परेषां का कथा? 'मच्छभवंतो वसिएण' इति पाठान्तरं वाच्यम् उषितं–निवासः कृतः। क्व? अप्रतिष्ठाने–सप्तमनरकपृथिव्यां मध्यवर्तिनरकावासे। मयेति गम्यते। कीदृशेन? अप्रार्थितश्चासौ आगतः मत्स्यभवश्च तस्य भवान्तर्मुहूर्तोषितस्तेन। कियन्तं कालम्? पट्षष्टिं सागरोपमाणि। कथमुषितम्? निरन्तरं–व्यवधानरहितं यथा भवति तथा। यच्च व्यवधानं तच्चोक्तक्रमेणान्तर्मुहूर्तमानं(नो?) मत्स्यभवः ॥ ४३ ॥

चि० अ०—साम्प्रतं यथाऽनुभवं विडम्बनां गाथाचतुष्केणाह–वुच्छं०। हे जिन! परेषां का कथा?। मयैव पट्षष्टिम् अतराणि–सागरोपमाणि यावत् अप्रतिष्ठाने–सप्तमनरकपृथिव्या मध्य-वर्त्तिनरकावासे उषितम्। कीदृशेन? अप्रार्थितागतः–अचिन्तितोपनतो यो मत्स्यभवस्तस्मिन् मुहूर्तकालमुषितेन। निरन्तरमिति व्यवधानस्याल्पत्वात् ॥ ४३ ॥

पू० अ०—हे देव! परेषां का कथा? मयैव सप्तमनरकमध्यवर्तिनरके प्राप्ते अप्रतिष्ठानाभिधे पट्षष्टिं ६६ सागरोपमाणि उषितम्। मया किंविधेन? अचिन्तितागते मत्स्यभवेऽन्तर्मुहूर्त्तमात्रकालमुषितेन यद्वाऽप्रा-र्थितोपनते मत्स्यभवेऽर्न्तमुहूर्त्तमुषितेन। सागरोपमापेक्षया मुहूर्त्तस्यात्यन्तस्तोकत्वेन सतोऽप्यविवक्षितत्वान्निरन्तर-मित्युक्तम्। अत्र च मत्स्यशब्दः सामान्यमत्स्यवाच्यपि तण्डुलमत्स्यवाची ॥ ४३ ॥

※ ※ ※ ※

ध० अ०—हे नाथ! ज्ञानावरणसमुच्छादितेनापि मया तिर्यक्त्वेऽपि शीतोष्णवर्षधारा-निपातदुःखं सुतीक्ष्णमनुभूतम्। हे नाथ! ज्ञानावरणीय कर्मिं आच्छादिइं मइं तिर्यंचइ माहि शीत काल तणुं वर्षा कालनी धारा तणउं निपात–पडिवा तणउं दुःख सुट्ठु–अतिहिं अनुभविउं। एतलइ स्युं भाव? जे पट–लूगडइ ढांकिउ हुइ ते शीत तणूं दुःख ऊपनूं

न जाणइ तिम तिर्यंचनइं सहजिइं ज्ञानावरणीय कर्मनउ उदय हुइ तीणं भाषा अणबो-लियानूं दुःख सदा हुइ। मइं ज्ञानावरणि आच्छादिइं हूतइं दुःख अनुभविउं ॥ ४४ ॥

नें० अ०—सीउण्ह०। तिर्यक्त्वेऽप्यनुभूतं-सेवितं शीतं च उष्णं वर्षधारानिपातस्तेभ्यस्तैर्वा दुःखं-वेदनारूपं सुतीक्ष्णं दुःसहमानशत् (?) तस्य। मयेति गम्यते। किंविधेन? ज्ञानावरणसमुच्छादितेनापि। कोऽर्थः? यः किल ज्ञानावरणैर्वस्त्रादिभिरावृतः स्यात् तस्य कथं शीतादिप्रजनितं दुःखं सम्भवति? मया तु ज्ञानावरणच्छादितेनाप्यनुभूतम्। प्रायेण प्रभूतज्ञानावरणीयस्य कर्मणः तिर्यक्ष्वेव सम्भवादिति ॥ ४४ ॥

चि० अ०—सीउण्ह०। तिर्यक्ष्वपि तीक्ष्णं दुःखं मयाऽनुभूतम्-सोढम्। शीतोष्णवर्षधारा-निपातदुःखम्। निपातशब्दः प्रत्येकं योज्यः। कीदृशेन मया? ज्ञानावरणसमुच्छादितेनापि। कोऽर्थः? यः पटाद्यावृतो भवति तस्य शीतादिदुःखं न स्यात्, मया तु ज्ञानावरणसमुच्छादितेनापि सोढमिति। प्रायेण प्रभूतस्य ज्ञानावरणीयस्य तिर्यक्ष्वेव सम्भवात् ॥ ४४ ॥

पू० अ०—मया तिर्यक्त्वेऽपि उत्पन्नेन इत्यर्थः। शीतोष्णवर्षधारा, निपातशब्दः शीतादित्रये योज्यः, सुतीक्ष्णं-दुःसहं सोढं ज्ञानावरणाख्येन कर्मणा उत्-प्राबल्येन छादितेन अपिर्विरोधे। यः किल नानाविधै-रावरणैराच्छादितः स्यात्, कथं स शीतादिभिरभिभूयते इति ॥ ४४ ॥

* * * *

ध० अ०—हे नाथ! अन्तर्-धर्मध्यानान्निष्क्रान्तैः पात्रैः प्रियकलत्रपुत्रैर्भवनाटकेषु अङ्काः शून्या निर्ध्याताः। हे नाथ! अन्तर्-धर्मध्यान तउ नीसरे पात्रे प्रिय भर्तार कलत्र पुत्रे भव-संसाररूपीइ नाटकि शून्य अंक नीठिया। जिम नटाव रुंपरीय विनइ आंतरइ नाना प्रकार रूप करी लोकनइ रंजवइ तिम धर्मध्यान तद्रूप[1] पटनु नीसरिउ जीव पिता फीटी पुत्र थाइ माता कलत्र थाइ बेटउ बाप थाइ कलत्र माता थाइ इणि परि संसार नाटकि अनेक रूप करतइं अंक तणा सइ नीठव्यां ॥ ४५ ॥

नें० अ०—अंतोनिक्खं०। हे देव! संसाररङ्गान्तरे सर्वत्र अखण्डितान्यस्य मोहनरेशस्य पुरः कर्मपरिणामसूत्रधारेण चतुर्गतिनाटकानि अभिधीयन्ते। तन्मध्याच्चाभिधेयमानेषु मनुष्यगतिरेव तत्तदवस्थाविशेषादनुभूयमानशृङ्गारादिरसात्मकत्वेन नाटकानीव तेषु मनुष्यगतिनाटकेषु मया निर्ध्याताः-दृष्टाः। के? अङ्का-उत्सङ्गाः, अन्यत्राधिकारपरिच्छेदाः। किम्भूताः? शून्याः। कैः? वल्लभकलत्रपुत्रैः। किंविधैः? सातोदयाल्लब्धैः-प्राप्तैः। यद्वा स्वोचितगुणाधारत्वेन पात्रभूतैः। तेषामेव क्रोडक्रीडाविलासयोग्यत्वात्। कथं रहितत्वं तेषामित्याह—अन्तर्-मध्यादुत्सङ्गस्यैव निष्क्रान्तैः-आयुःक्षयेण यमकिङ्करीकृतैः, मृतैरित्यर्थः। पक्षे निष्क्रान्तैः-गतैरिति। नरभवे उत्पन्नेन मया कलत्रादिवियोगोद्भूतं दुःखमनुभूतमित्यर्थः। नाटकेष्वपि विष्कम्भसूचिताभिनेय-वस्तुसमाप्तिरूपाद्यङ्काः। ते च रङ्गाङ्गणमध्यान्निष्क्रामद्भिश्चतुर्विधाभिनेयवस्तुसमाप्तिनिपुणैरभि-नायकपात्रैः शून्याः स्युः। पात्राण्यपि कलत्रपुत्ररूपाणि भवन्ति ॥ ४५ ॥

---

१ 'भव्युं' इति ख-पाठः। २ 'उपरीयच्छिनइ' इति ख-पाठः। ३ 'ध्यानरूप' इति ख-पाठः।

चि० अ०—अंतो० । हे जिन ! मनुष्यभवनाटकेषु मयाऽङ्काः शून्या[नि]–विरहिताः । शून्यत्वे विशेषणद्वारेण हेतुमाह—तैः । कीदृशैः ? अन्तर्–मध्यादुत्सङ्गस्यैव निष्क्रान्तैरायुःक्षयेण । इदमत्र तात्पर्यम्–नरजन्मन्युत्पन्नेन मया प्रियकलत्रपुत्रादिवियोगजं दुःखमनुभूतमिति । नाटकेष्वपि विष्कम्भकसूचिताभियेनवस्तुसमाप्तिरूपा ह्यङ्कास्ते च रङ्गाङ्गणमध्यान्निष्क्रामद्भिः चतुर्विधाभिनयनिपुणैरभिनायकपात्रैः शून्याः स्युरिति ॥ ४५ ॥

पू० अ०—हे देव ! इह संसाररङ्गान्तरे सर्वत्राखण्डिताज्ञस्य मोहनरेशस्य पुरः कर्मपरिणामसूत्रधारेण चतुर्गतिनाटकान्यभिधीयन्ते । तन्मध्याच्च अभिनीयमानेषु मनुष्यगतिरेव तत्तदवस्थाविशेषानुभूयमानशृङ्गारादिरसात्मकत्वेन नाटकानीव तेषु मनुष्यगतिनाटकेषु नरभवेषु उत्पन्नेन मया अङ्कात्–सङ्गात् शून्या निर्घाता–दृष्टाः । कैः ? प्रियकलत्रपुत्रैः । किंविधैः ? लब्धैः अन्तर्–मध्यादुत्सङ्गस्यैव निष्क्रान्तैः–आयुःक्षयेण मृतैः । नाटकेषु अपि विष्कम्भसूचिताभिनेयवस्तुसमाप्तिरूपा अङ्काः, ते च रणाङ्गणमध्यान्निष्क्रामद्भिश्चतुर्विधाभिनयनिपुणैरभिनायकपात्रैः शून्याः स्युः । पात्राण्यपि कलत्राणि रूपाणि भवन्ति ॥ ४५ ॥

꧁ ꧁ ꧁ ꧁

ध० अ०—हे नाथ ! मया हीनदेवत्वेषु रिपूणां ऋद्धयो दृष्टाः, महर्द्धिकसुराणामपि आज्ञा कृता इत्यादिदौर्गत्यसन्तापाः सोढाः । हे नाथ ! मइं हीनदेव–किलबिसीया भूत प्रेत झोटिंग मोगा राक्षस माहि अनेकि वइरी तणी रिद्धी दिट्ठी । महर्द्धिक देवताइनी आज्ञा कीधी इत्यादिक अनेक दारिद्र्य तणा संताप सह्या ॥ ४६ ॥

ने० अ०—दिट्ठो० । दृष्टाः समृद्धयो रिपूणां–शत्रूणां आज्ञाः–शासनानि कृताः–परिपालिता महर्द्धिकसुराणामित्येवंप्रकारेण हीनदेवत्वेषु–किल्बिष-व्यन्तरादिकेषु । दुर्गतस्य भावो दौर्गत्यं–निःसत्त्वं सन्तापः–पराभवादिभेदः दारिद्र्यं च क्लेशश्च तौ सोढौ–सेवितौ ॥ ४६ ॥

चि० अ०—दिट्ठा० । हे जिन ! देवगतिगतेनापीदं दुःखमनुभूतमिति योगः । रिपुऋद्धयो दृष्टाः, महर्द्धिकसुराणामाज्ञाः कृताः, हीनदेवत्वेषु किल्बिषिकत्व-व्यन्तरत्वादिषु दौर्गत्य-सन्तापौ सोढौ । तत्र दौर्गत्यं–निःस्वत्वम्, सन्तापः–परिभवादिजश्चेतःखेदः तौ । प्राकृतत्वाद् द्विवचने बहुवचनम् ॥ ४६ ॥

पू० अ०—दृष्टा रिपुसमृद्धयः । सुरेष्वपि स्यादरातित्वम् । आज्ञाः कृता महर्द्धिकसुराणां हीण०–किल्बिषिकत्वादिषु दौर्गत्यं–निःसत्त्वं सन्तापश्च तौ सोढौ ॥ ४६ ॥

꧁ ꧁ ꧁ ꧁

ध० अ०—अथ कवि जेतलु काल नरकादिक गतिइं जीव फिरिउ ते स्वरूप बोलइ । हे नाथ ! मया भववनं मिथ्यात्वादिजलेन सिञ्चता सता पुद्गलपरावर्ता अतिक्रान्ताः । हे नाथ ! मइं भव–संसाररूपीउं वन मिथ्यात्व अविरति कषाय योगरूप जलि करी सींचतइं हुंतइं पुद्गलपरावर्त बहुशः–अनेक वार अतिक्रम्या । किंवि० पुद्गलपरावर्ताः ? बहुशः अरघट्ट

इव घटीसंस्थानावसर्पिण्युत्सर्पिणीभिः परिगताः । अरहट्टनी परिं घटीनइं संस्थानि उत्सर्पिणी अवसर्पिणीए परिगत–युक्त छइं ॥ ४७ ॥

ने० अ०—अधुना यावन्तं कालं नरकादिगतिषु भ्रान्तस्तावन्तं कालं दर्शयन्नाह—सिंचं० । सिञ्चता–अभिषेकं कुर्वता, मयेति गम्यते । भववनं–संसारकाननम् । एकत्र मुख्यजलेन, अन्यत्र मिथ्यात्वा-ऽविरति-कषाय-प्रमादादिदुष्टयोगरूपजलेन पल्लट्टा–जलपरावर्ताः पेल्लया प्रेरिता–अतिवाहिताः । क इव ? अरघट्ट इव । कथम्भूताः ? घटीसंस्थानावसर्पिण्युत्सर्पिण्यस्ताभिः परिगताः–समेताः बहुशः–अनेकशः प्रेरिताः । यथा (अर)घट्टिको वनं सिञ्चन् अरघट्टिकपरिवर्तान् बहुशः परिवर्तयति ॥ ४७ ॥

चि० अ०—सिंचंतेण० । हे जिन ! मया परिवर्ता इति एकदेशे समु(दायो)पचारात् पुद्गलपरावर्त्ताः पर्यस्ताः–प्रेरिता अतिवाहिताः । कीदृशा ? घटीसंस्थानेन–आनुपूर्व्या पङ्क्तिक्रमेण परिवर्तमानाभिरुत्सर्पिण्यवसर्पिणीभिः परिगताः–समेताः । बहुशः–अनन्ताः । किं कुर्वाणेन मया इत्याह—भव एव चतुर्गतिगतासङ्ख्यदुःखशाखिभिः सङ्कुलत्वेन वनमिव वनं, ततः सिञ्चता–आश्रवद्वारेण सङ्कलितैः पापाम्बुभिः अभिषिच्य वृद्धिं नयता । केनेव मया ? अरघट्टकेनेव । अरघट्टको हि वनमभिषिञ्चन् अरघट्टपरिवर्त्तान् बहु परिवर्त्तयति, तत्र घटीमालामूलादारभ्य पर्यवसानपर्यन्त एकः परावर्त्तः । तेऽप्यानुपूर्व्या स्थिताभिर्घटीभिरुपेताः स्युः, बहूंश्च तानरघट्टकोऽतिवाहयति ॥ ४७ ॥

पू० अ०—मयाऽरघट्टकेनेव ए(पदै)कदेशे समुदायोपचारात् परिवर्ताः पुद्गलपरावर्त्ता अतिवाहिताः घटीसंस्थानेन परिवर्तमानाभिरुत्सर्पिण्यवसर्पिणीभिः परिगताः–समेताः । भववनमभिषिञ्चता अरघट्टकोऽपि वनं अभिषिञ्चन्नरघट्टपरावर्त्तान् बहुशः परिवर्तयति । तत्र घटिमालामूलादारभ्य पर्यवसानपर्यन्त एकः परावर्त्तः । तेऽप्यानुपूर्व्या स्थिताभिर्घटीभिरुपेताः स्युः ॥ ४७ ॥

ॐ ॐ ॐ ॐ

ध० अ०—हे नाथ ! अहं अनन्तकालं भवे–संसारे भ्रान्तो जन्म-जरा-मरणलक्षणेभ्यो दुःखेभ्यो न भीतः । हे नाथ ! हउं अनंत काल भव–संसार माहि भम्यु जन्म–जरा–मरणलक्षणरूप दुःखनु बीहनउ नहीं । सम्प्रति हे नाथ ! त्वयि दृष्टे सति जन्मादिभयं जातं च पलायितं च । हे स्वामी ! तइं हिवडां दीठइं हूंतइं जन्मादिक भय संपन्नं इदं पलायितं–नाठंउं ॥ ४८ ॥

ने० अ०—( भमिउं० ) । हे नाथ ! भ्रान्तोऽनन्तकालं जीवस्य अनन्तादिकालव्यवस्थितत्वात् भवे–संसारे न श्रान्तः दुःखेभ्यो न भीतो–न त्रस्तः, दुःखानां जन्ममरणादिरूपाणाम् । साम्प्रतं तु कषायादिभिरहमित्थं विडम्बितः । पुनर्विवेककुशलत्वात् त्वयि दृष्टे जातं–समुत्पन्नं भयं पलायितं–नष्टं च । चौ तुल्यकालवाचिनौ । ये हि भगवन्तं सम्यक् पश्यन्ति, तेऽवश्यं लघुसंसारिणो भवन्ति इत्यागमवचनान्निश्चीयते ॥ ४८ ॥

चि० अ०—एवमतीतकालाद्यनुभूतमात्मनः स्वरूपमभिधाय वर्तमानविषयमाह—भमिओ० । हे नाथ ! अहं सम्भ्रान्तः–पर्यटितः तांसिंश्च भवे अहं अनन्तकालं भ्रान्तः दुःखेभ्यः, तथापि बम्भ्राम्यमाणः न मनागपि भीतः । सम्प्रति च त्वयि दृष्टे–देवत्वेन मनसि स्थापिते तेभ्यो दुःखेभ्यो भयं ज्ञा(जा)तम्, पलायितं च नष्टं च । चशब्दौ तुल्यकालवचनौ ॥ ४८ ॥

पू० अ०—संसारे अनन्तकालं भ्रान्तस्तत्र च दुःखेभ्यो न भीतः । साम्प्रतं त्वयि दृष्टे जातं भयं पलायितम् । चौ तुल्यकालवाचकौ । कोपादिभिरित्थं विडम्बित इति जातं ( भयं ), इत्थं शमादिभिर्निराकरिष्ये इति गतं चेत्यर्थः ॥ ४८ ॥

✽ ✽ ✽ ✽

ध० अ०—अथ कवि कीधी स्तुतिनूं ध्यान बोलई । हे जगद्गुरो ! यद्यपि त्वं कृतार्थः यद्यपि त्वं मध्यस्थस्तथा प्रार्थये । हे जगद्गुरु ! यद्यपि तूं कृतार्थ यद्यपि तूं मध्यस्थ तथापि प्रार्थउं । पुनरपि कदाप्यस्माकं आत्मानं दर्शयेः । वली किवार तूं आपणपूं दिषाडिजे ॥४९॥

ने० अ०—साम्प्रतं स्तुतिविधानमाह—जइवि० । हे जगद्गुरो ! यद्यपि कृतो मुक्तिगमनलक्षणेऽर्थे प्रयोजनं येन, मध्ये–रक्तद्विष्टमूढैरस्प(स्पृ ?)ष्टैरनन्तरालवर्तिन्यवस्थाविशेषे चिदात्मनि स्वस्वरूपे तिष्ठतीति मध्यस्थः–समभावस्तथापि प्रार्थयामि–याचेऽहम् । किम् ? दापयेः–दर्शयेः आत्मानं पुनरप्यागामिकाले क(स्मिं)श्चित् कथञ्चित् अस्माकं करुणार्हाणाम् ॥ ४९ ॥

चि० अ०—अथ प्रार्थनारूपां स्तुतिमाह–जइवि० । यद्यपि कृतो–निष्ठितोऽर्थः–प्रयोजनं येन स कृतार्थः, यद्यपि मध्यस्थः–उदासीनश्च तथापि प्रार्थयामि—कइया वि–कदाचिदपि कस्मिंश्च देशे काले वा पुनरपि त्वमस्माकं आत्मानं दाविज्जसु–दर्शनप्रदानेन प्रसादं कुर्याः ॥ ४९ ॥

पू० अ०—यद्यपि कृतोऽर्थः–प्रयोजनं येन सः । रागद्वेषान्तरालवर्तिनि मध्ये चिदात्मनि स्वस्वरूपे तिष्ठतीति मध्यस्थः । य एवंविधः स कथं अप्रार्थितः परार्थाय यतते इत्यतः प्रार्थयामि इत्युक्तं प्रार्थनामाह—कदाचिदपि कस्मिंश्चिद् देशे काले वा पुनः पुनरात्मानं दर्शय ॥ ४९ ॥

✽ ✽ ✽ ✽

ध० अ०—ध्यानाग्निप्रदीप्तकर्मेन्धन ! इति–अमुना प्रकारेण मया बालबुद्धिना–मूर्खेण भक्त्या त्वं स्तुतः । ध्यानरूपीइं अग्निज्वालूं कर्मरूप इंधण तूं इति–ईणंइ प्रकारिइ मइं बालबुद्धिइं–मूर्खबुद्धिइं भक्तिइं सूचिओ अथवा धणपालबुद्धि धणपाल कविनी बुद्धिइं स्तव्युं । हे भवभयसमुद्रबोहित्थबोधिफल ! भव–संसाररूप समुद्रनइं प्रवहण समान बोधि–सम्यक्त्व तत्त्वावबोधनूं फल एवंविध छइं ॥ ५० ॥

इति श्रीधर्मशेपरमहोपाध्यायविरचिता बालावबोधाय ऋषभपञ्चाशिका(याः)
संस्कृतप्राकृतावचूरिः सम्पूर्णा ॥ छ ॥ छ ॥
ग्रन्थसङ्ख्या ३२६[1].

---

१ 'अक्षर ८ श्लोकसङ्ख्या श्रीमदंचलगच्छे पुस्तिका ॥छ॥' इत्यधिकः ख–पाठः ।

ने० अ०—अधुनोपसंहरन्नाह—इय० । इति–उक्तेन प्रकारेण स्तुतो–नमस्कृतो मया। किंविधेन? बालबुद्धिना–अतिमन्दमतिनाऽपि । ध्यानाग्निना प्रदीपितं–ज्वालितं कर्मलक्षणमिन्धनं येन स तथा तस्यामन्त्रणम् । भवभयसमुद्रबोहित्थ!–संसारोपद्रवयानपात्र! बोधिफलं यस्मात् तत् तथा । भक्त्या–विशिष्टभावेन अनया च वक्रोक्त्या कविरात्मनोऽभिधानं दर्शयति धण(न)पाल इति ॥ ५० ॥

श्रीधनपालकृतिर्गणिना विवृतेह नेमिचन्द्रेण ।
बोधिनिमित्तं इति श्रीऋषभपञ्चाशिकावचूरिः समाप्ता ॥ छ ॥

चि० अ०—इदानीं स्तुतिकृताशंसारूपां भङ्ग्यन्तरेण स्वनामगर्भां चापश्चिमां परिसमाप्तिगाथामाह–इअ झाण० । हे ध्यानाग्निप्रदीपितकर्मेन्धन! 'इय०' । ध्यानाग्निना दीपितानि कर्माण्येवैधांसि येन सः । बालबुद्धिनाऽपि मया भक्त्या स्तुतः बाला–तन्वी बुद्धिर्यस्य स तेन । किंविशिष्टस्त्वम्? थुओ–स्तुतः । केन? मया । त्वं हे भव(भय)समुद्रबोहित्थ! त्वं मम प्रति बोधिफलो भव । तत्र बोधिः–सम्यक्त्वावाप्तिः एवं फलं यस्मात् इति बोधिफलः ॥ ५० ॥

॥ इति ऋषभपञ्चाशिकाऽवचूर्णिः समाप्ता ॥

लिखिता भट्टारकप्रभुश्रीश्रीश्रीसोमदेवसूरिशिष्याणुचारित्रहेमगणिना स्वपरोपकाराय श्रीमति 'श्रीसीरोहीनगरे । संवत् १५२६ वर्षे ॥ शुभं भवतु लेखकपाठकयोः ॥

पू० अ०—बालस्येव चातुर्यरहिता बुद्धिर्यस्य यद्वा बाला–तन्वी बुद्धिर्यस्य । बोधिः–जिनधर्मावाप्तिस्तां फलति बोधिफलः स त्वमेवंविधः, भवभयमेव अलब्धमध्यत्वेन सुदुस्तरत्वेन समुद्रस्तत्र बोहित्थं–प्रवहणम् ॥५०॥

इति पण्डितश्रीधनपालकविविरचिता ऋषभपंचाशिकाऽवचूरिसमेता सम्पूर्णा ॥

---

१ अन्तिमगाथाप्रान्ते तु उल्लेखोऽयम्—

"इति श्रीऋषभपंचाशिकासूत्रं संपूर्णं पण्डितधनपालविरचितं ॥ लिखितं पं.ज्ञानभद्रगणिशिष्यलावण्यप्रियमुनिना सं. १५३५ वर्षे मार्ग शुदि ७ सरसुदग्रामे ॥छ॥

२ बोहित्थशब्दसम्बन्धिनी विचारणा कृताऽनुवादे मया पूर्वं, परं तदानीं नैव कोपोल्लेखः प्रदत्तस्तत्र, अधुना सम्प्राप्तः सः, यथाहि—

"बोहित्थं वहनं पोतः" इति (अभि० का० ३, श्लो० ५४०), "बोहित्थं तु प्रवहणे" इति वैजयन्तीकोशेऽपि (पृ० १५५, श्लो० १५)।

महाकविश्रीधनपालविरचिता

# ॥ श्रीवीरस्तुतिः ॥

## ( विरोधालङ्कारमण्डिता )

## सावचूर्णिः



निम्मलनहे वि अणहे जिणाण चलणुप्पले पंणमिऊणं
वीरमविरुद्धवयणं थुणामि सविरुद्धवयणमहं ॥ १ ॥

[ निर्मलनखान्यपि अनखानि (अनघानि) जिनानां चरणोत्पलानि प्रणम्य ।
वीरमविरुद्धवचनं स्तौमि सविरुद्धवचनमहम् (सवि॰वचनमथम्) ॥ ]

अवचूर्णिः

निर्मलेति । निर्मलनखान्यपि अनखानि । अविरुद्धवचनमपि सविरुद्धवचनम् । जिनानां चरणोत्पलानि प्रणम्य वीरं स्तौमीति सम्बन्धो विरोधपक्षे । परिहारपक्षे तु विरोधोत्थापकान्येव पदान्यन्यथा [2]व्याख्येयानि । शेषाणि [3]{तु} पूर्ववदिति सर्वत्र द्रष्टव्यम् । तत्र न विद्यते अघं-व्यसनं वा पापं येषां तान्यनघानि । तथा सह विरुद्धेन-विरुद्धालङ्कारसारवचनेन वर्तते तद् यथा {भवति तथा} स्तौमीति क्रियाविशेषणम् । अनेन विरोधालङ्कारालङ्कृतेयं स्[4]तुतिरिति कथयति । तथाहि—

"विरुद्धानां पदार्थानां, यत्र संसर्गदर्शनम् ।
विशेषदर्शनायैव, स विरोधः स्मृतो यथा ॥ १ ॥"

इति विरोधलक्षणम् । तच्चास्यां {स्तुतौ} [5]समस्तीति ॥ १ ॥

---

१ 'पणमिऊण' इति घ-पाठः । २ 'व्याख्यायान्ति' इति क-पाठः, 'व्याख्यायन्ते' इति तु ग-पाठः । ३ { } एतच्चिह्नेन सूच्यते मुख्यतया क-प्रतेः पाठाधिक्यम् । ४ 'श्रुतिरिति' इति ख-ग-पाठः । ५ 'समस्तऽस्तीति' इति ख-ग-पाठः ।

## શબ્દાર્થ

**निम्मल** ( निर्मल )=નિર્મળ, સ્વચ્છ.
**नह** ( नख )=નખ.
**निम्मलनहे**=નિર્મળ નખવાળાં.
**पि** ( अपि )=પણ.
**अणहे** ( अनखानि )=નખ વિનાનાં.
**अह** ( अघ ) = (૧) વ્યસન; (૨) પાપ.
**अणहे** ( अनघानि )=પાપ રહિત, પવિત્ર.
**जिणाण** ( जिनाना )= જિનોનાં, તીર્થંકરોના.
**चलण** ( चरण )=ચરણ, પગ.
**उप्पल** ( उत्पल )=કમળ.
**चलणोप्पले** ( चलनोत्पलानि )=ચરણ-કમલોને.
**पणमिऊणं** ( प्रणम्य )=પ્રણામ કરીને.
**वीरं** ( वीरं )=વીરને, મહાવીરને.
**अविरुद्ध** ( अविरुद्ध )=વિરોધ રહિત.
**वयण** ( वचन )=વચન.
**अविरुद्धवयणं**=વિરોધ રહિત છે વચન જેનું એવા.
**थुणामि** ( स्तौमि )=હું સ્તુતિ કરૂં છું.
**सविरुद्ध** ( सविरुद्ध )=વિરોધથી યુક્ત.
**सविरुद्धवयणं**=(૧)=વિરોધ યુક્ત વચન છે જેનું એવા; (૨) વિરોધાલંકાર યુક્ત વચને કરીને.
**अहं** ( अहं )=હું.
**मह** ( मथ् )=મથવું.
**सविरुद्धवयणमहं** ( सविरुद्धवचनमथं )=વિરૂદ્ધ વચન-વાળાઓને મથનાર.

## પદ્યાર્થ

**વિરોધાર્થ**—" નિર્મળ નખવાળાં છતાં નખ-રહિત એવાં તીર્થંકરોનાં ચરણ-કમલોને પ્રણામ કરીને જેનું વચન ( પરસ્પર ) અવિરૂદ્ધ છે એવા છતાં વિરૂદ્ધ વચનવાળા વીર ( પ્રભુ )ની હું સ્તુતિ કરૂં છું."

**પરિહારાર્થ**—"નિર્મળ નખવાળાં તથા પવિત્ર એવાં તીર્થંકરોનાં ચરણ-કમલોને પ્રણામ કરીને જેનું વચન પરસ્પર અવિરૂદ્ધ છે એવા વીર (પ્રભુ)ની વિરોધાલંકાર યુક્ત વચન દ્વારા સ્તુતિ કરૂંછું [ અથવા જેનું વચન વિરોધ રહિત છે એવા તેમજ (પરસ્પર) વિરૂદ્ધ વચન-વાળા-એકાન્તવાદી ઓને મથનારા-જીતનારા એવા વીર (પ્રભુ)ની હું સ્તુતિ કરૂં છું ]."—૧

## સ્પષ્ટીકરણ

**પદ્યાર્થની પુનરાવૃત્તિ—**

અહીં પદ્યાર્થ બે વાર આપવામાં આવ્યો છે અને હવે પછી પણ તેમ કરવું પડશે. આનું કારણ એ છે કે કવિરાજ **ધનપાલે** આ કાવ્યમાં વિરોધાલંકારને પૂર્ણ સ્થાન આપ્યું છે. તેની આ સમગ્ર કૃતિ વિરોધાલંકારથી વિભૂષિત છે. આને લીધે પ્રથમ વિરોધસૂચક પદ્યાર્થ આપવામાં આવ્યો છે અને ત્યાર પછી તેના પરિહારનો નિર્દેશક પદ્યાર્થ આપવામાં આવ્યો છે.

**અર્થનું આધિક્ય—**

'सविरुद्धवयणमहं' નું सविरुद्धवचनमथं એવું સંસ્કૃત રૂપ અવચૂરિકારે સૂચવ્યું નથી, પરંતુ તેમ છતાં જે અત્ર સૂચવવામાં આવ્યું છે તે વ્યાજબી છે, કેમકે તે **સિદ્ધહૈમ** વ્યા-કરણથી સિદ્ધ થઇ શકે છે. જુઓ પૃ૦ ૨૦૩.

વળી અવચૂરિકાર તો સામાન્ય નિર્દેશાત્મક કથન કરે છે એટલે તે સમગ્ર અર્થો સૂચવે જ એવું કંઇ નથી. सविरुद्ध૦માંથી स શબ્દને પૃથક્ પણ ગણી શકાય તેમ છે. તેમ થતાં જરૂર सः અને अहं એ બે સર્વનામોના એક જ સાથેના પ્રયોગમય આ પદ્ય બને છે.

પરંતુ તેમ થાય તો તે અનુચિત નથી. શું શ્રીમાનતુંગસૂરિકૃત ભક્તામરસ્તોત્રના પંચમ પદ્યના નિમ્ન-લિખિત-ચરણમાં એવો પ્રયોગ નથી ?

"सोऽहं तथापि तव भक्तिवशान्मुनीश !"

આવે સ્થળે પરોક્ષતાદ્યોતક सः સર્વનામ અને પ્રત્યક્ષતાસૂચક अहं સર્વનામનો એક સાથે પ્રયોગ કરી કર્તા પોતાની લઘુતા પ્રદર્શિત કરતા હોય એમ ભાસે છે.

વિરોધ-અલંકાર—

અલંકારના શબ્દાલંકાર અને અર્થાલંકાર એવા જે બે મુખ્ય ભેદો છે, તે પૈકી અર્થાલંકારની કોટિમાં વિરોધ-અલંકારનો અંતર્ભાવ થાય છે. 'अपि' શબ્દથી એનું દ્યોતન થાય છે. શ્રીવાગ્ભટકૃત વાગ્ભટાલંકાર (પૃ૦ ૫૫)માં એનું લક્ષણ નીચે મુજબ આપવામાં આવ્યું છે:—

"आपाते हि विरुद्धत्वं, यत्र वाक्ये न तत्त्वतः ।
शब्दार्थकृतमाभाति, स विरोधः स्मृतो यथा ॥ १२१ ॥"

અર્થાત્ જે વાક્યમાં આરમ્ભમાં શબ્દજન્ય કે [1]અર્થજન્ય વિરોધ ભાસે છે, પરંતુ વાસ્તવિક રીતે જ્યાં વિરૂદ્ધતા નથી, તે 'વિરોધ' કહેવાય છે. કહેવાનું તાત્પર્ય એ છે કે વિરોધ જેવું જણાય, પરંતુ ખરી રીતે વિરોધ ન હોય તેનું નામ 'વિરોધાલંકાર' છે; બાકી વસ્તુતઃ પણ વિરોધ હોય તો કાવ્યત્વનો સંભવ ક્યાંથી રહે ?

આ ધનપાલીય સ્તુતિની જેમ વિરોધાલંકારમય અન્ય કોઇ પ્રાકૃત કૃતિ હોય તો તે મારા જોવા જાણવામાં નથી. એક એવી સંસ્કૃત કૃતિની પ્રતિ મને હાલમાં શ્રીવિચક્ષણવિજય તરફથી મળી છે. છૂટક છૂટક એવાં પદ્યો તો પ્રાયઃ દરેક [2]મહાકાવ્યમાં મળી આવે છે. પ્રસ્તુતમાં

---

૧ આને માટે આ શ્રીવીર-સ્તુતિનું દ્વિતીય પદ્ય વિચારો.

૨ દાખલા તરીકે શ્રીદેવવિમલગણિકૃત હીરસૌભાગ્યના ચતુર્થ સર્ગગત નિમ્ન-લિખિત સાતમા અને આઠમા શ્લોકો:—

"बभूव मुख्यो वसुभूतिसूनु–स्तेषां गणीनामिह गौतमाह्वः ।
यो वक्रभावं न बभार पृथ्वी–सुतोऽपि नो विष्णुपदावलम्बी ॥
यत्पाणिपद्मः सपुनर्भवोऽपि, दत्ते नतानामपुनर्भवं यत् ।
शिष्यीकृता येन भवं विहाय, शिवं श्रयन्ते च तदत्र चित्रम् ॥"

આનો અનુવાદ 'શ્રીભક્તામરસ્તોત્રની પાદપૂર્તિરૂપ કાવ્યસંગ્રહ'ના પ્રથમ વિભાગ (પૃ૦ ૨૪-૨૫)માં મેં આપ્યો છે એથી અત્ર ફરીથી આપવામાં આવતો નથી.

અત્ર શ્રીજિનપ્રભસૂરિકૃત ગૌતમસ્તોત્રનું થોડે ઘણે અંશે ઉપર્યુક્ત ભાવસૂચક ૧૦મું પદ્ય ઉપસ્થિત કરૂં છું:—

"न रागवान् नो भजसेऽतिचारं, नालम्बसे वक्रगतिं कदाचित् ।
पुरस्कृतेनोऽपि घनाय नासि, तथापि पृथ्वीतनयोऽसि रूढः ॥"

અર્થાત્ જોકે તું પૃથ્વીના પુત્રરૂપે રૂઢ છે (મંગળ પૃથ્વીનો પુત્ર ગણાતો હોવાથી જોકે તું મંગળ ગ્રહ છે), છતાં તું રાતો (રાગી) નથી, તું અતિચાર સેવતો નથી, તારી ગતિ કદી વાંકી નથી (તું જડ સ્વભાવી નથી) તેમજ તેં સૂર્ય (સ્વામી)ને આગળ કર્યો છે છતાં તું મેઘને માટે નથી.

પ્રાકૃત ઉદાહરણો માટે આપણે શ્રીહરિભદ્રસૂરિકૃત સમરાઇચ્ચકહા તરફ નજર કરશું તો પ્રારંભમાં જ નિમ્ન-લિખિત પદ્ય આ અલંકારથી વિભૂષિત જણાય છે.

"परमसिरिवद्धमाणं पणट्ठमाणं विसुद्धवरनाणं ।
गयजोणं जोइसं सयंभुयं वद्धमाणं च ॥"

કવિરાજ ધનપાલની તિલકમંજરી તરફ દૃષ્ટિપાત કરીશું તો તેના આરંભમાં અવતરણિકા-રૂપે આપેલ પદ્યો પૈકી નિમ્ન-લિખિત ૫૧મા પદ્યનો ઉત્તરાર્ધ આ અલંકારથી અલંકૃત છેઃ—

"अलब्धदेवर्षिरिति प्रसिद्धिं यो दानवर्षित्वविभूषितोऽपि"

અર્થાત્ જે દાનવના ઋષિપણાથી વિભૂષિત હોઇ દેવના ઋષિ તરીકેની પ્રસિદ્ધિને પામ્યો. અત્ર दानवर्षित्वनो દાનની વૃષ્ટિ એવો અર્થ કરવાથી વિરોધનો પરિહાર થાય છે.

કલ્યાણમંદિર સ્તોત્રનું નિમ્ન-લિખિત ૩૦મું પદ્ય પણ વિરોધાલંકારથી વિભૂષિત છે જોકે આ અલંકારની ઉત્પત્તિ પદચ્છેદની વિચિત્રતાને આભારી છેઃ—

"विश्वेश्वरोऽपि जनपालक ! दुर्गतस्त्वं
किं वाऽक्षरप्रकृतिरप्यलिपिस्त्वमीश ! ।
अज्ञानवत्यपि सदैव कथञ्चिदेव
ज्ञानं त्वयि स्फुरति विश्वविकाशहेतुः ॥"

રૂપ-સિદ્ધિ—

પ્રાકૃત શબ્દનું મૂળ સંસ્કૃત કેવી રીતે થાય છે એ ધ્યાનમાં આવે તેટલા માટે 'રૂપ-સિદ્ધિ' એ શીર્ષક દ્વારા કેટલાંક રૂપો સિદ્ધ કરવામાં આવે છે. અત્ર એ નિવેદન કરવું જોઇએ કે આ માટે કલિકાલસર્વજ્ઞ શ્રીહેમચન્દ્રસૂરિકૃત પ્રાકૃત વ્યાકરણનાં સૂત્રોનો આધાર લેવામાં આવે છે. આ સમગ્ર પ્રાકૃત સૂત્રો સૂરિવર્યકૃત સિદ્ધ-હૈમ વ્યાકરણના આઠમા અધ્યાયમાં અંતર્ગત થાય છે એટલે અધ્યયાંક ન આપતાં ફક્ત પાદાંક અને સૂત્રાંક આપવામાં આવે તોપણ ચાલી શકે, છતાં સ્પષ્ટતાની ખાતર, તેમજ કવચિત્ સંસ્કૃત વ્યાકરણના સૂત્રો આવતાં હોવાથી ત્રણે અંકો આપવામાં આવે છે.

સૌથી પ્રથમ अनख અને अनघ ઉપરથી अनह રૂપ કેમ બને છે તે વિચારીએ. '[1]ख-घ-थ-ध-भाम्' (૮-૧-૧૮૭) એ સૂત્રથી अनखनुं તેમજ अनघनुं अनह રૂપ બને છે અને '[2]नो णः' (૮-૧-૨૨૮) એ સૂત્રથી अनहनुं अणह બને છે.

वचननुं वयण માટે પ્રથમ '[3]क-ग-च-ज-त-द-प-य-वां प्रायो लुक्' (૮-૧-૧૭૭) એ સૂત્રથી वचननुं वअन થાય છે અને '[4]अवर्णो यश्रुतिः' (૮-૧-૧૮૦) એ સૂત્રથી वअननुं वयन થાય છે અને 'नो णः' સૂત્રથી वयननुं वयण બને છે. આ ઉપરથી જોઇ શકાય છે તેમ सविरुद्धवयणमहंની विरुद्धवचनमहं છાયા બરાબર છે. એનું सविरुद्धवचनमर्थं એ પણ રૂપાન્તર થાય છે તે માટે પ્રથમ ઉપર્યુક્ત સૂત્રોથી सविरुद्धवयणमर्थं બને છે અને પછી 'ख-घ-थ०' એ સૂત્રથી सविरुद्धवयणमहं બને છે.

* * * *

૧ સ્વરથી પર, જોડાક્ષર વગરના અને આદિરૂપ નહિ એવા અર્થાત્ બે સ્વરોની વચ્ચે આવેલા ख, घ, थ, ध અને भ એ અક્ષરોનો ह થાય છે.

૨ સ્વરથી પર, જોડાક્ષરથી વર્જિત તેમજ આદિભૂત ન હોય એવા न નો ण થાય છે.

૩ સ્વરથી પર, જોડાક્ષર રહિત તેમજ આદિભૂત નહિ એવા એટલે કે બે સ્વરોની વચ્ચે આવેલ क्, ग्, च्, ज्, त्, द्, प् અને य् નો ઘણે ભાગે લોપ થાય છે.

૪ क-ग-च० એ સૂત્ર વડે લોપ થયા પછી अनी અવર્ણ પછી પર લઘુ પ્રયત્નતર સ્થાનવાળા यनी શ્રુતિ થાય છે એટલે अ ને બદલે य થાય છે.

**खविअकसायचउक्को वि नोकसायक्खयं कह करेसि ? ।**
**कह नट्ठनामगुत्तो[1] जयगुरु ! जयपायडो होसि ॥ २ ॥**

[ क्षपितकषायचतुष्कोऽपि नो कषायक्षयं (नोकषायक्षयं) कथं करोषि ? ।
कथं नष्टनामगोत्रो जगद्गुरो! जगत्प्रकटो भवसि? ॥ ]

अवचूर्णिः

खविएति । क्षपितकषायचतुष्कोऽपि कथं कषायजयं नो करोषि ? नष्टे नामगोत्रे–अभिधानकुले यस्य स {तथा हे} जगद्गुरो! कथं जगत्प्रकटो भवसि इति विरोधः । परिहारस्तु नोकषायक्षयं–हास्यादिनवकप्रलयं करोषि; नष्टनामगोत्रः–क्षीणषष्ठसप्तमकर्मा ॥ २ ॥

## શબ્દાર્થ

खविअ ( क्षपित )=નાશ કરેલ.
कसाय ( कषाय )=કષાય.
चउक्क ( चतुष्क )=ચતુષ્ટય, ચારનું જોડકું.
खविअकसायचउक्को=નાશ કર્યો છે કષાયના ચતુષ્ટયનો જેણે એવો.
वि ( अपि )=પણ.
नो ( नो )=નહિ.
नो ( नः )=અમારા.
क्खय ( क्षय )=ક્ષય, વિનાશ.
कसायक्खयं=કષાયના ક્ષયને.
नोकसाय ( नोकषाय )=નોકષાય.
नोकसायक्खयं=નોકષાયના ક્ષયને.
कह ( कथं )=કેવી રીતે.
करेसि ( करोषि )=તું કરે છે.
नट्ठ ( नष्ट )=નાશ પામેલું.
नाम ( नामन् )=(૧) નામ, અભિધાન; (૨) નામ-કર્મ.
गुत्त ( गोत्र )=(૧) ગોત્ર, વંશ; (૨) ગોત્ર-કર્મ.
नट्ठनामगुत्तो=નાશ પામ્યાં છે નામ અને ગોત્ર જેનાં એવો.
जय ( जगत् )=જગત્, વિશ્વ, દુનિયા.
गुरु ( गुरु )=ગુરૂ, આચાર્ય.
जयगुरु !=હે વિશ્વના ગુરૂ !
पायड ( प्रकट )=પ્રકટ, પ્રસિદ્ધ.
जयपायडो=જગત્-પ્રસિદ્ધ.
होसि ( भवसि )=તુ થાય છે.

## પદ્યાર્થ

વિ૦—"(ક્રોધ, માન, માયા અને લોભ એ) ચાર કષાયોનો જેણે ક્ષય કર્યો છે એવો તું અમારા કષાયોનો નાશ કેવી રીતે કરે છે [ અથવા કષાયનો ક્ષય કેમ કરતો નથી ] ? જેનાં નામ અને ગોત્રનો વિનાશ થયો છે એવો તું હે જગદ્ગુરૂ! જગત્-પ્રસિદ્ધ કેમ થઇ શકે ?"

પરિ૦—"કષાય-ચતુષ્ટયનો વિનાશક એવો તું નોકષાયનો ક્ષય કરે છે અથવા અમારા કષાયનો ક્ષય કરે છે. જેણે નામ-કર્મ અને ગોત્ર-કર્મનો નાશ કર્યો છે તે જગદ્-ગુરૂ અને જગત્-પ્રસિદ્ધ થાય છે."—૨

## સ્પષ્ટીકરણ

શબ્દ-વિરોધને બદલે અર્થ-વિરોધથી વિભૂષિત આ પદ્યમાં ઉપર સૂચવ્યા મુજબ ક્રોધ રહિત પ્રભુ નોકષાયનો કે અન્યની ક્રોધાદિક વૃત્તિનો ક્ષય કરી શકે એ આશ્ચર્યજનક ઘટના-

1 प्रथमायां या ।

નો નિર્દેશ છે. કહેવાની મતલબ એ છે કે કોઇનો વિનાશ કરવા માટે ક્રોધાદિ સામગ્રી જોઇએ. અત્રે તો ઉલટું તેના અભાવથી વિનાશ થાય છે એ શું નવાઇ જેવું નથી? આનું સમાધાન બહુ સુન્દર રીતે **કલ્યાણમંદિર**ના ૧૩મા પદ્યના પરામર્શથી થઇ જાય છે. ત્યાં કહ્યું છે કે—

"क्रोधस्त्वया यदि विभो ! प्रथमं निरस्तो
ध्वस्तास्तदा वत कथं किल कर्मचौराः ।
प्लोषत्यमुत्र यदि वा शिशिराऽपि लोके
नीलद्रुमाणि विपिनानि न किं हिमानी ? ॥"

અર્થાત્ હે નાથ! જો તેં પ્રથમ ક્રોધનો ક્ષય કર્યો, તો પછી (અવશેષ રહેલા) કર્મરૂપ ચોરોનો ખરેખર તેં કેવી રીતે વિનાશ કર્યો? (આ વિરોધનું સમાધાન કવિરાજ ઉત્તરાર્ધ વડે કરતાં કહે છે કે વિનાશ કરવાનું સામાન્ય હથિયાર ક્રોધ છે, બાકી અલૌકિક હથિયાર તો શાન્તિ, શમ, ક્ષમા છે, અર્થાત્ પોતાના આત્માને અત્યંત શાન્ત-દાન્ત બનાવવાથી કર્મરૂપ ચોરને નસાડી શકાય છે, કેમકે) આ લોકને વિષે શીતળ હિમ-સમૂહ પણ શું લીલાં વૃક્ષવાળાં વનોને બાળતો નથી કે?

કલિકાલસર્વજ્ઞ **શ્રીહેમચન્દ્રસૂરિ** પણ **યોગશાસ્ત્ર** (પ્ર૦ ૪, શ્લો૦ ૨૧) માં કથે છે કે—

"क्षान्त्या क्रोधो मृदुत्वेन, मानो मायाऽऽर्जवेन च ।
लोभश्चानीहया जेयाः, कषाया इति सङ्ग्रहः ॥"

એટલે કે ક્રોધના ઉપર વિજય મેળવવા માટે ક્રોધરૂપી શસ્ત્ર કામ લાગતું નથી, પરંતુ ક્ષાન્તિ-ક્ષમા કામ લાગે છે, ઇત્યાદિ.

**ધમ્મપદ**ના યમકવર્ગનો નિમ્ન-લિખિત પંચમ શ્લોક પણ મનનીય છે. ત્યાં કહ્યું છે કે—

"नहि वेरेन वेरानि, सम्मन्तीध कुदाचनं ।
अवेरेन च सम्मंति, एस धम्मो सनंतनो ॥"

**નોકષાય—**

કષાયના વ્યુત્પત્તિ વગેરેના સંબંધમાં થોડો ઘણો વિચાર **ઋષભપંચાશિકા** (પૃ૦ ૯૦-૯૧)માં કરવામાં આવ્યો છે. અત્ર નોકષાય સંબંધી ઉલ્લેખ કરવામાં આવે છે. કષાયની સાથે જ રહેનારા અથવા કષાયને ઉત્પન્ન કરવામાં કારણરૂપ જે કષાય તે 'નોકષાય' કહેવાય છે. અથવા નોશબ્દ દેશવાચક પણ છે એ વાત ધ્યાનમાં લઇએ તો કષાયના એક દેશરૂપ જે હોય તે પણ 'નોકષાય' કહેવાય. **શ્રીતત્ત્વાર્થાધિગમસૂત્ર** (અ૦ ૮, સૂ૦ ૧૦)ની વૃત્તિ (પૃ૦ ૧૪૧)માં **શ્રીસિદ્ધસેન**ગણિ કથે છે કે—

"कषायैकदेशत्वात् कषायविशेषत्वाद् वा नोकषाया हास्यादयः"

આ નોકષાયના (૧) હાસ્ય, (૨) રતિ, (૩) શોક, (૪) અરતિ, (૫) ભય, (૬) જુગુપ્સા, (૭) પુરૂષ-વેદ, (૮) સ્ત્રી-વેદ અને (૯) નપુંસક-વેદ એમ [1]નવ ભેદો છે, એ વાત **ઋષભપંચાશિકા**ના ૧૨મા પૃષ્ઠમાં વિચારી ગયા છિયે.

---

૧ સરખાવો શ્રીતત્ત્વાર્થાધિગમસૂત્ર (અ૦ ૮, સૂ૦ ૧૦)નું સ્વોપજ્ઞ ભાષ્ય (પૃ૦ ૧૪૧).

નામ-કર્મ અને ગોત્ર-કર્મ—

**ઋષભપંચાશિકા**ના ૧૨ મા પૃષ્ઠમાં આપણે જોઇ ગયા તેમ કર્મના જે આઠ વિભાગો પાડવામાં આવે છે તે પૈકી આ છઠ્ઠા અને સાતમા વિભાગો છે. જીવને અનેક રૂપ પ્રતિ નમાવે-પમાડે તે 'નામ-કર્મ' છે, જ્યારે ઉચ્ચ કે નીચ શબ્દો વડે આત્માને બોલાવે તે 'ગોત્ર-કર્મ' છે. આ કર્મોને શાસ્ત્રમાં ચિતારાની અને કુંભારની ઉપમા આપી છે. **નવતત્ત્વપ્રકરણ**માં કહ્યું પણ છે કે—

"पडपडिहारसिमज्ज-हडचित्तकुलालभंडगारीणं ।
जह एएसिं भावा, कम्माण वि जाण तह भावा ॥ ३९ ॥"

[ पट-प्रतिहारा-ऽसिमद्य-हडि-चित्र-कुलाल-भाण्डागारिणाम् ।
यथैतेषां भावाः कर्मणामपि जानीथ तथा भावाः ॥]

નામ-કર્મને ચિતારા સરખું કહેવાનું કારણ એ છે કે જેમ ચિતારો એક છબી ચિતરતાં હાથ, પગ, વગેરે જૂદાં જૂદાં અવયવોનો આકાર ચિતરે છે, તેમ નામ-કર્મ પણ ગતિ, સંહનન, સંસ્થાન વગેરેને ઉદ્દેશીને જીવનાં જૂદાં જૂદાં રૂપ બનાવે છે.

જેમ કુંભાર એક ઘડો મદિરાનો ઘડે તો તે જુગુપ્સનીય બને અને બીજો ઘડો મંગળ-કુંભનો બનાવે તો તે પૂજનીય બને તેમ ગોત્ર-કર્મ પણ કોઇ આત્માને નીચ કુળમાં જન્મ અપાવે છે તો કોઇ આત્માને ઉચ્ચ કુળમાં જન્મ અપાવે છે. આથી તેને કુંભારનો ઇલ્કાબ આપવો તે બરાબર છે. જૈન શાસ્ત્રમાં ઇક્ષ્વાકુ આદિ વંશને ઉત્તમ ગણવામાં આવે છે, જ્યારે ચાણ્ડાલાદિકના વંશને નીચ ગણવામાં આવે છે.

ગોત્ર કર્મના તો ઉચ્ચ અને નીચ એવા બે જ મુખ્ય ભેદો છે, જ્યારે નામ-કર્મના તો ગતિ, જાતિ, શરીર ઇત્યાદિ અનેક ભેદો છે. આ બે કર્મો પણ વેદનીય અને આયુષ્ય કર્મની જેમ અઘાતિ-કર્મ છે. એનો ઉચ્છેદ થતાં જીવ સિદ્ધ બને છે—ઇશ્વર થાય છે—પરમ પૂર્ણતાને પામે છે. આવી પરિસ્થિતિમાં તેને જગદ્ગુરૂ કે જગત્-પ્રસિદ્ધ કહેવામાં આવે તો તેમાં શું ખોટું છે?

※ ※ ※ ※

**कह नायकुलुप्पन्नो वि नाह! सुरसं पयं न पत्थेसि?।**
**उव्वहसि मोहनिद्दारओ वि कह सासयं बोहं? ॥ ३ ॥**

[ कथं नाग(ज्ञात)कुलोत्पन्नोऽपि नाथ![1] सुरसं पयः ([2]सुरसम्पदं) न प्रार्थयसि?।
उद्वहसि मोहनिद्रारतोऽपि (मोहनिर्दारकोऽपि) कथं शाश्वतं बोधं (वा ओघं)।।]

अवचूर्णिः

कहेति। कथं नागकुलोत्पन्नोऽपि {-सर्पान्वयप्रसूतोऽपि} सुरसं-स्वादु (पयः-) दुग्धं न प्रार्थयसि। उद्वहसि-धारयसि मोहनिद्रारतोऽपि-मूढतातन्द्रासक्तोऽपि कथं शाश्वतं

1 'न अथ' इत्यपि सम्भवति। 2 'सुरसं पदं' वा।

